| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विकम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मलमासमहात्म्य | - | पुराण | पूर्ण | - | 3/6 | 120 | संस्कृत | कागद | 11 | 30 | | |

M-3010

श्रीगणेशायनमः ॥ ॥ श्रीलक्ष्मीनृसिंहःप्रसन्नोस्तु ॥ एकदामुनयःसर्वेनैमि
षारण्यवासिनः ॥ विशालायांरतायेचहरिद्वारनिवासिनः ॥ १ ॥ सशिष्या-
स्तेसमागम्यशौनकाद्याधृतव्रताः ॥ प्रोचुःसूतंसुखासीनंव्यासशिष्यमक-
ल्मषम् ॥ २ ॥ ऋषयऊचुः ॥ अधिमासव्रतंब्रूहिसूतजीवचिरंसुखम् ॥ श्रु
तंव्यासमुखाद्यच्चविधानमपिनोवद ॥ ३ ॥ मलमासविधानंतुकोविधिःक्का-
चदेवता ॥ कस्मिन्मासेतिथौकस्यांकिंफलंकथयाशुनः ॥ ३ ॥ सूतउवाच
॥ शृणुध्वमृषयःसर्वेकथांपौराणिकींशुभाम् ॥लक्ष्मीमाधवसंवादंशृण्वतांपा
पनाशनम् ॥ एकदासुखमासीनंदेवदेवंजनार्दनम् ॥ पप्रच्छदेवीभर्तारंम-
हालक्ष्मीश्चमाधवम् ॥ ६ ॥ श्रीरुवाच ॥ देवदेवजगन्नाथभुक्तिमुक्तिप्रदाय
क ॥ कथयस्वप्रसादेनसंशयोमेहृदिस्थितः ॥ ७ ॥ मुनीश्वरावदंतिस्मकृष्ण-
द्वैपायनादयः ॥ अदत्तंनैवलभ्येतदत्तंचैवोपतिष्ठति ॥ ८ ॥ यथावंध्यागृहस्थ

म० १ स्यपतिवंशविनाशिनी ॥ तथादानविहीनंतुजंतोर्जन्मनिरर्थकम् ॥ ९ ॥ त थापिकथयंतीहदैवज्ञाःशास्त्रकोविदाः ॥ मलिम्लुचेतुसंप्राप्तेक्रियाःसर्वाःप रित्यजेत् ॥ १० ॥ युक्तायुक्तंयदादेवपूर्वाचार्यैर्यथोदितम् ॥ पितृकार्यंदेवका र्यंतीर्थयात्राव्रतादिकम् ॥ ११ ॥ क्षौरंमौंजीविवाहौचव्रतंकाम्योपवासिकम् ॥ मलिम्लुचेसदात्याज्यंगृहस्थैश्चविशेषतः ॥ १२ ॥ अधिमासेतुसंप्राप्ते किंकार्यंब्रूहिमेप्रभो ॥ कस्योद्देशेनदातव्यंकर्तव्यंकस्यपूजनम् ॥ १३ ॥ श्री विष्णुरुवाच ॥ शृणुदेविमहाभागेसर्वलोकस्यहेतवे ॥ स्वयंदातास्वयंभो-क्तायोददातिद्विजातये ॥ १४ ॥ नान्योदातानभोक्तान्यइहलोकेपरत्रच ॥ असंक्रांतेतुसंप्राप्तेमामुद्दिश्यव्रतंचरेत् ॥ १५ ॥ अधिमासस्याधिपतिरहंवै पुरुषोत्तमः ॥ स्नानंदानंजपोहोमःस्वाध्यायःपितृतर्पणम् ॥ १६ ॥ देवार्चा-चतथाचैवयेर्चयंतिनराइह ॥ अक्षय्यंतद्भवेत्सर्वंमामुद्दिश्यचयत्कृतम् ॥ १७

अ० १

१

मलमासोगतःशून्योयेषांदेविप्रमादतः ॥ दारिद्र्यंपुत्रशोकंचपापपंकेनगर्हिताः ॥ १८ ॥ तेषांसुखप्रदोहंचयेर्चयंतिद्विजोत्तमान् ॥ तेषांदास्याम्यहंकांतेस्वल्पंदत्तंत्वनंतकम् ॥ १९ ॥ लक्ष्मीरुवाच ॥ यदिनाथत्वयाप्रोक्तमहमेवप्रदायकः ॥ केनत्वंप्रीतिमायासिलोकानांव्रतचारिणाम् ॥ २० ॥ प्रसादसुमुखोभूत्वामलमासव्रतंवद ॥ उद्यापनंचविधिवत्सेतिहाससमन्वितम् ॥ २२ ॥ विष्णुरुवाच ॥ ॥ असंक्रांतोयदामासःप्राप्यतेमानवैःप्रिये ॥ महोत्सवस्तदाकार्यआत्मनोहितकांक्षिभिः ॥ २२ ॥ कृष्णपक्षेचतुर्दश्यांनवम्यांवासुरेश्वरि ॥ अष्टम्यांचैवकर्तव्यंव्रतंशोकविनाशनम् ॥ २३ ॥ यथालाभोपहारेणमासेचास्मिन्मलिम्लुचे ॥ पुण्येऽह्निप्रातरुत्थायकृत्वापूर्वाह्णिकींक्रियाम् २४ ॥ गृह्णीयान्नियमंपश्चाद्वासुदेवंहृदिस्मरन् ॥ उपवासस्यनक्तस्यचैकभुक्तस्यभामिनि ॥ एकस्यनिश्चयंकृत्वाततोविप्रान्निमंत्रयेत् ॥ सपत्नीकान्सदा

म० चारान्स्मार्त्तांश्चवैदिकांस्तथा ॥ २६ ॥ श्रुत्यध्ययनसंपन्नान्कुलीनान्मि-
२ तभाषिणः ॥ ततोमध्याह्नसमयेलक्ष्मीयुक्तंसनातनम् ॥ स्थापयेदव्रणेकुंभे अ०
वेदमंत्रैर्द्विजोत्तमैः ॥ पुजयेत्परयाभक्त्यागोत्रिभिःपुरुषोत्तमम् ॥ २८ ॥ १
शुचितोयेनसंस्नाप्यपंचामृतयुतेनच ॥ चंदनेनसुगंधेनपुष्पैर्नानाविधैःप्रि
ये ॥ २९ ॥ मिष्टान्नेनैवनैवेद्यंधूपैर्दीपैस्तुपूजयेत् ॥ आच्छादनंसुवस्त्रैश्चम
हामूल्यैर्विशेषतः ॥ ३० ॥ घंटामृदंगघोषैश्चशंखध्वनिसमन्वितैः ॥ आरा
र्तिकंव्रतीकुर्यात्कर्पूरागरुचंदनैः ॥ ३१ ॥ अलाभेचोदकेनापिफलमानंत्य-
हेतवे ॥ ताम्रपात्रस्थितंतोयंचंदनाक्षतपुष्पकम् ॥ अर्घ्यंदद्यात्सपत्नीकःप्र
हृष्टेनांतरात्मना ॥ मंत्रेणानेनदेवेशिब्राह्मणैःसहमांस्मरन् ॥ ३३ ॥ देवदे
वमहाभागप्रणतार्त्तिहराच्युत ॥ गृहाणार्घ्यंमयादत्तंसर्वकामप्रदोभव ॥ ३४ २
अर्चयित्वार्घ्यदानेनब्राह्मणान्पूजयेत्ततः ॥ सपत्नीकान्शुचीन्शांतान्मधुः

चूर्णैःसुभोजनैः ॥ ३५ ॥ स्मर्तव्योद्विजरूपेणतत्पत्नींत्वामनुस्मरन् ॥ परिधा
ययथाशक्त्यावस्त्रालंकारचंदनैः ॥ ३६ ॥ द्राक्षाम्रककपित्थैश्चपनसैःकद-
लीफलैः ॥ खर्जूरैर्नारिकेलैश्चनारिंगैर्दाडिमैःप्रिये ॥ ३७ ॥ घृतपक्वान्नगो
धूमैर्माषान्नैःस्वादुतत्परैः ॥ ऊर्वारुकर्कटीशाकैःशृंगवेरैःसमूलकैः ॥ ३८ ॥
राजमाषभवैःशाकैःपिष्टतक्रोष्णसंभवैः ॥ अन्यैश्चविविधैशाकैःसमपक्वैःपृथ
क्पृथक् ॥ ३९ ॥ भक्ष्यंभोज्यंचलेह्यादिकटुकानिविशेषतः ॥ गोरसैश्चवि-
चित्रैस्तुजलैरेलासुवासितैः ॥ ४० ॥ तथाह्यवसरंप्राप्यपरिकल्प्यमृदुब्रूव-
न् ॥ इदंस्वादुइदंभोज्यंभवदर्थेनिवेदितम् ॥ ४१ ॥ धन्योस्म्यनुगृहीतोस्मि
सार्थकंममर्मंदिरम् ॥ विसर्जयेत्ततोविप्रान्दत्त्वातांबूलदक्षिणाम् ॥ ४२ ॥
पत्राणिपूगखंडानिचूर्णंचखदिरंशुभम् ॥ कर्पूरैलालवंगादिजातीफलतज-
त्वचा ॥ ४३ ॥ चतुर्भिर्मीलितैर्देवीतांबूलंममवल्लभम् ॥ मृगनाभिमरीचा

 

निमुरमांसीनखांस्तथा ॥ ४४ ॥ योददातिद्विजाग्रेभ्योसभवेत्सुखभाङ्नरः
॥ सुभगश्चसदाचारोवल्लभश्चजनेशुभे ॥ ४५ ॥ सुंदरीसुभगाचैवकामि-
नीपतिवल्लभा ॥ पुत्रसौभाग्यसंयुक्तातांबूलाज्जायतेबला ॥ ४६ ॥ पत्रैस्तु
केशवः प्रीतः पूगैरीशः सहांबया ॥ चूर्णेनैवानलः प्रीतः खदिरेणचमन्मथः ॥
४७ ॥ चतुर्भिर्मित्रावरुणौयः पुष्णातिजगत्त्रयम् ॥ परितोष्यसपत्नीकान्हस्ते
दत्वाचमोदकान् ॥ ४८ ॥ आसीमांतमनुव्रज्यभुंजीतसहबंधुभिः ॥ मलमा
सव्रतंनारीयाकरोतिसमुद्रजे ॥ ४९ ॥ नवैधव्यंनदारिद्र्यंपुत्रशोकः कदाचन
॥ पुरुषोवैभवेद्देवियदिकुर्यान्मालिम्लुचम् ॥ ५० ॥ ॥ इतिश्रीपद्मपुराणे
प्रथमार्धेकृष्णश्रीसंवादेमलिम्लुचमाहात्म्येप्रथमोऽध्यायः ॥ १ ॥ छ ॥
श्रीकृष्णउवाच ॥ ॥ माहात्म्यंशृणुदेवेशिमलमासस्यमत्प्रिये ॥ येचमा-
साः ससंक्रातास्तेषांस्वामीरविः स्मृतः ॥ १ ॥ मलमासेचसर्वेस्मिन्स्वयंदेवो

जनार्दनः ॥ तमुद्दिश्यकृतंयच्चस्वल्पंवायदिवाबहु ॥ २ ॥ हुतंदत्तंतपस्तप्तं
तदक्षय्यकरंभवेत् ॥ संप्राप्तेमलमासेतुस्वशक्त्यानकरोतियः ॥ ३ ॥ दानंहो
मंव्रतंस्नानंतपोब्राह्मणभोजनम् ॥ तेनलिप्तेनदेहेनसयातिनरकंचिरम् ॥४॥
एकभुक्तेननक्तेनतथैवायाचितेनवा ॥ उपवासेनकुर्वीतमलमासव्रतंनरः ॥ ५
दानेवापिव्रतेवापियस्यशक्तिर्नविद्यते ॥ शरीरशोषणंतेनकर्तव्यंतीर्थसेवन-
म् ॥ ६ ॥ वचनाद्द्विजमुख्यानांसर्वव्रतफलंभवेत् ॥ सर्वव्यापीयथाविष्णुः
सर्वभूतदयाकरः ॥ ७ ॥ मलिम्लुचेतथादानंलोकद्वयसुखावहम् ॥ ॥ श्री
रुवाच ॥ ॥ निर्धनाश्चदुराचाराःपरभाग्योपजीविनः ॥ ८ ॥ नरानकिंचि-
ज्जानंतिपशुवद्विचरंतिहि ॥ विवेकोनास्तियेषांवैकिंकार्यंतैर्मलिम्लुचे ॥ ९ ॥
स्वामिन्हरेकृपालुस्त्वंकरुणःकरुणानिधे ॥ तत्सर्वंब्रूहिमेदेवयद्यहंतववल्लभा
॥ १० ॥ हरिरुवाच ॥ ॥ व्रतेदानेतथानक्तेयाचितेकायशोषणे ॥ सर्वथा

म० ४ नास्तिसामर्थ्यंतैःकार्यंद्विजसेवनम् ॥ ११ ॥ साधूनांसेवनंकार्यंसर्वतीर्थफल
प्रदम् ॥ कालेनफलतेतीर्थंसद्योवैसाधुसेवनम् ॥ १२ ॥ साधूनांदर्शनंस्पर्शः
कीर्तनंश्रवणंतथा ॥ कर्तव्यंशक्तिहीनैस्तुलोकांतरसुखप्रदम् ॥ १३ ॥ मल
मासेसमायातेनरैःश्रेयोभिकांक्षिभिः॥तैरेवपूजनंकार्यंगवांविप्रस्यसेवनम् ॥
१४ ॥ श्रीरुवाच ॥ भगवन्योगिनांश्रेष्ठसर्वधर्माःश्रुतामया ॥ साधूनांश्रो
तुमिच्छामिगवांपूजनमुत्तमम् ॥ १५ ॥ कथमेषापवित्रागौःकथंपूज्याचकिं
फलम् ॥ तत्सर्वंब्रूहिमेदेवमलमासफलाप्तये ॥ १६ ॥ विष्णुरुवाच ॥ शृणुदे-
विप्रवक्ष्यामिप्रथमंपूजनंगवाम् ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश॥१७॥
गावःपवित्रमतुलंगावोमंगलमुत्तमम्॥गावोभूमिश्चभूतानिस्थावराणिचरा-
णिच ॥ १८ ॥ नीराजयतियोंगानिगवांपुच्छेनभाग्यवान् ॥ अलक्ष्मीःकलहो
रोगस्तदंगाद्यातिदूरतः ॥ १९ ॥ गोमयंयमुनासाक्षात्गोमूत्रंनर्मदाशुभा ॥

श्रीरंगं गासमंयासांकिंपवित्रमतः परम् ॥ २० ॥ गोभिर्विप्रैश्चदेवैश्चसतीभिः
सत्यवादिभिः ॥ अलुब्धैर्दानशीलैश्चसप्तभिर्धार्यतेमही ॥ २१ ॥ वेदाःशास्त्रा
णिधर्माश्चपुराणानीतिहासकम् ॥ आब्रह्मस्तंबपर्यंतंगोषुतिष्ठंतिनित्यशः ॥
२२ ॥ नान्यत्पश्यामिलोकेस्मिन्पावनंहिमलिम्लुचे ॥ विप्रागावश्चदानंचप
रोपकरणंतथा ॥ २३ ॥ गावःपवित्राःश्रेष्ठाश्चपावनाजगदुत्तमाः ॥ दधिदुग्ध
घृतैश्चैवयासांयज्ञःप्रवर्तते ॥ २५ ॥ तेनयज्ञमशेषंहिगोमूलंसंप्रचक्षते ॥ गा
वोधिकास्तपस्विभ्यःसदासर्वेभ्यएवच ॥ २५ ॥ गोभिस्तुल्यंनपश्यामिधनं
किंचिदिहोच्यते ॥ कीर्तनंश्रवणंदानंदर्शनंचापिसुंदरि ॥ २६ ॥ स्पर्शनंपूज
नंचैवमार्जनंचप्रदाक्षिणाम् ॥ गवांप्रपश्यतेदेविसर्वपापहरंपरम् ॥ २७ ॥ ब्रा
ह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतम् ॥ एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति
॥ २८ ॥ गावोलक्ष्म्याःसदामूलंगोषुमंत्रोनविद्यते ॥ स्वाहास्वधावषट्कारौ

गोषुनित्यंप्रतिष्ठितौ ॥२९॥ अग्न्यागाराणिविप्राणांदेवतायतनानिच ॥ पूजं
तेशक्तायासांकिंपवित्रमतःपरम् ॥ ३० ॥ गावोयज्ञस्यनेत्रंवैगावोयज्ञस्यवै
मुखं ॥ अमृतंह्यक्षयंदिव्यंक्षीरंगावोवहंतिच ॥ ३१ ॥ अमृतंचैवगोक्षीरमि-
त्युवाचप्रजापतिः ॥ अमृतायतनंचैताःसर्वलोकनमस्कृताः ॥ ३२॥ योगंतुं
वाञ्छतिस्वर्गंगोपूजांसकरोतुवै ॥ अधिमासेविशेषेणसुभक्त्यायवसादिना ॥
३३ ॥ प्रदक्षिणीकृतागावोयेनमासेमलिम्लुचे ॥ प्रदक्षिणीकृतातेनसशैला
सवनाऽवनिः ॥ ३४ ॥ आदित्यदुहितागौर्हिपृथ्वीयंपरिकीर्तिता ॥ श्रेयार्थंस
र्वलोकानामुत्पन्नाक्रतुसिद्धये ॥ ३५ ॥ गोभ्योयज्ञाःप्रवर्तंतेगोभ्योयज्ञाःसमु
त्थिताः ॥ गोभ्योवेदाःसमुत्तीर्णाःसषडंगपदक्रमाः ॥ तृणानिखादंतिवसंत्य
रण्येपिबंतितोयान्यपरिग्रहाणि ॥ दुह्यंतिवाह्यंतिपुनंतिविश्वंगवांरसैर्जीवति
जीवलोकः ॥ ३७ ॥ स्पृष्टाश्चगावःशमयंतिपापंदत्ताश्चगावस्त्रिदिवंनयंति ॥

संरक्षिताश्चोपनयंतिवित्तंगोभिर्नतुल्यंधनमस्तिकिंचित् ॥ ३८॥ सायत्रचा
श्नातिददातिलक्ष्मींपापापहामित्रविवर्धनाच ॥ सएवनित्यंपरिभुज्यतेचगो
भिर्नराणामिहासिद्धतंत्रः॥३९॥तृणानिशुष्कानिवनेचरित्वापीत्वासुतोयान्य
मृतंस्रवंति॥ यद्गोमयाद्याश्चपुनंतिलोकान्गोभिर्नतुल्यंभुवनेचदेवि ॥ ४० ॥
अनेनैवविधानेनपूजयित्वाप्रदापयेत् ॥ सुविप्रायसुशीलांगांमलमासेमलाप
हे ॥४१ ॥ पूजनंसंप्रवक्ष्यामिगवामघनिवारणम् ॥ दानंदेयंविशेषेणस्वर्गदं
सुखदंनृणाम् ॥ ४२ ॥ इतिश्रीपद्मपुराणेप्रथमार्धेमलमासमाहात्म्येगोपू-
जनंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥
श्रीकृष्णउवाच ॥ ॥ सुशीलांलक्षणवतींयुवतींवत्ससंयुताम् ॥ बहुदुग्धव
तींस्निग्धांधेनुंदद्याद्विचक्षणः ॥ १ ॥ नकृशांमृतवत्सांवावंध्यांरोगान्वितांत-
था ॥ नचव्यंगामतिश्रांतांगांदद्याद्ब्राह्मणायवै ॥ २ ॥ योदद्यान्नोपयुक्तार्थां

जीर्णांधेनुंचनिष्फलाम् ॥ तमःसंप्रविशेद्दाताद्विजंक्लेशेनयोजयेत् ॥ ३ ॥ नैक
शृंगांचलच्छृगांस्फुटिताक्षींचलत्खुराम् ॥ नदद्यात्रिस्तनींचैवशुभ्रामेवच-
दापयेत् ॥४॥ होमार्थमग्निहोत्रस्ययोगांदद्याद्गुणान्विताम् ॥सुरत्नपूर्णापृथि-
वीतेनदत्तानसंशयः ॥५ ॥ गौरेकस्यैवदातव्याश्रोत्रियस्यविशेषतः ॥ साहि
तारयतेपूर्वान्सप्तसप्तत्रिसप्तच ॥ ६ ॥ सागौर्न्यायार्जितादत्ताकृत्स्नंसंतारये
त्कुलम् ॥ सुपात्रायार्थिनेपूज्यपूजितांदाक्षिणान्विताम् ॥ ७ ॥ विधिवत्तुयदा
दत्तापात्रेधेनुःसदक्षिणा ॥ तदातारयतेजंतून्कुलानामयुतैःशतै ॥ ८॥ अपा
त्रेसातुगौर्दत्तादातारंनरकंनयेत् ॥ कुलैकविंशतियुतंगृहीतारंतुपातयेत् ॥९
नापात्रेविदुषादेयाह्यात्मनःशुभमिच्छता ॥ गीताधेनुर्हिरण्यंचपात्रेदत्तमनं
तकम् ॥१०॥ एकाह्येकस्यदातव्याबहूनांनकदाचन ॥ साविक्रीताविभक्ताच
दहत्यासप्तमंकुलं॥ ११॥बहुक्षीरांचयोगांवैब्राह्मणायोपपादयेत्॥उत्तारयेत्स

चात्मानंसप्तसप्तकुलानिच ॥ १२ ॥ आदौसंपूजयेद्धेनुंप्रार्थयेच्चततःपरम् ॥
पूजयेद्विधिवद्विप्रंततोदानंसदक्षिणं ॥ १३ ॥ मयाचब्रह्मणासार्धंशिवेनचम-
हर्षिभिः ॥ विचार्यगोगुणान्नित्यंप्रार्थनेयंकृतापुरा ॥ १४ ॥ कृत्वाप्रदक्षिणा-
मादौगृहीत्वाश्रीफलंशुभं ॥मुत्काषादौनमस्कृत्यततःपूजांसमारभेत् ॥ १५॥
अथप्रार्थनामंत्रः ॥ यालक्ष्मीःसर्वभूतेषुयाचदेवेव्यवस्थिता ॥ धेनुरुपेणसा
देवीममपापंव्यपोहतु ॥ १६ ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहाचैवविभावसोः॥
स्वधायापितृमुख्यानांसाधेनुर्वरदास्तुमे ॥ १७ ॥ गावोमेअग्रतःसंतुगावोमे
संतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहं ॥ १८ ॥ पंचगावःसमुत्प
न्नामथ्यमानेमहोदधौ ॥ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः ॥ १९ ॥ या
धेनुःकश्यपस्यासीदत्रेर्वागौतमस्यच ॥ सास्तुकामफलादेवीइहलोकेपरत्र-
च ॥ २० ॥ याधेनुर्जमदग्नेश्चवसिष्ठस्यचयास्मृता ॥ विश्वामित्रस्ययाधेनुःसा

म० धनुर्वरदास्तुमे ॥ २१ ॥ शृंगमूलेगवांनित्यंब्रह्मविष्णूसमाश्रितौ ॥ शृंगाग्रेस अ०
७. र्वतीर्थानिस्थावराणिचराणिच ॥ २२ ॥ शिरोमध्येमहादेवःसर्वभूतमयःस्थि ३
तः ॥ ललाटाग्रेस्थितादेवीनासावंशेचषण्मुखः ॥ २३ ॥ कंबलश्वतरौनागौ
नासावंशेसमास्थितौ ॥ कर्णयोरश्विनौचैवचक्षुषोःशशिभास्करौ॥ २४॥ दंते
षुवायवःसर्वेजिव्हायांवरुणःस्थितः ॥ सरस्वतीचहुंकारेयमयक्षौचगंडयोः ॥
२५ ॥ संध्याद्वयंतथोष्ठाभ्यांग्रीवायामिंद्रसंस्थितः ॥ रक्षांसिकुक्षिदेशेतुसा-
ध्याश्चोरसिसंस्थिताः ॥ २६ ॥ चतुष्पात्सकलोधर्मःस्वयंजंघासुसंस्थितः ॥
खुरमध्येतुगंधर्वाःखुराग्रेषुचपर्वताः ॥ २७ ॥ खुराणांपश्चिमेभागेगणाह्यप्स-
रसंस्थितः ॥ रुद्राश्चैकादशपृष्ठेवसवःसर्वसंधिषु ॥ २८ ॥ श्रोणीतटस्थाः
पितरःसोमोलांगूलसंस्थितः ॥ आदित्यरश्मयोवालेपिंडीभूताव्यवस्थिताः ७
॥ २९ ॥ साक्षाद्गंगाचगोमुत्रंगोमयेयमुनास्थिता ॥ क्षीरेसरस्वतीदेवीनर्मदा

दधिसंश्रिता ॥ ३० ॥ हुताशनःस्वयंसर्पिर्ब्राह्मणागुल्फसंस्थिताः ॥ त्रयस्त्रिं
शत्तुदेवानांकोट्योरोमसुसंस्थिताः ॥ ३१ ॥ उदरेपृथिवीदेवीसशैलवनकान
ना ॥ चत्वारःसागराःपूर्णागवांयेतुपयोधराः ॥ ३२॥ एभिर्मंत्रैस्तुविधिवत्पू-
जयेत्परयाधिया ॥ हेमशृंगींरौप्यखुरींताम्रपृष्ठांसुशोभितां ॥ ३३ ॥ कांस्यो-
पदोहनांकंठेघंटाद्यैरुपशोभितां ॥ रक्तवस्त्रेणसंवीतांमाल्यैःकनकशोभितां
॥ ३४ ॥ ब्राह्मणंश्रुतिसंपन्नंकुलीनंधर्मवादिनं ॥ पूजयेत्परयाभक्त्याशांतंदां-
तमलोलुपं ॥ ३५ ॥अंगुलीयकवस्त्राद्यैःपूजयित्वाप्रदापयेत् ॥ ताम्रपात्रेघृतं
कृत्वामध्येपुच्छंनिधायच ॥ ३६ ॥ सतिलंसकुशंवारिगृहीत्वादानमाचरेत् ॥
अनेनैवतुमंत्रेणपात्रहस्तेजलंक्षिपेत् ॥ ३७॥ पात्रंवामनसिध्यात्वातोयमप्सु
विनिक्षिपेत्॥उद्दिश्यवासुदेवंचप्रीयतामितिचाब्रवीत्॥३८॥अथदानमंत्रः॥
यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी॥विश्वरूपधरोदेवःप्रीयतामनयाग

वा॥३९॥जलशायीब्रह्मपितापद्मनाभःसनातनः॥अनंतभोगशयनःप्रीयतां
परमःप्रभुः॥४०॥दक्षिणांचततोदद्यात्सुवर्णशक्तिमात्रतः॥ अनुव्रज्यनतोधे
नुंयोविप्रायप्रयच्छति ॥ ४१ ॥ अनेनविधिनाधेनुंयोविप्रायप्रयच्छति ॥ स
र्वकामसमृद्धात्माविष्णुलोकेमहीयते ॥ ४२ ॥ सर्वेषामपिपापानांज्ञाताना
मविजानतां ॥ प्रायश्चित्तमिदंप्रोक्तमृषिभिस्तत्वदर्शिभिः ॥ ४३ ॥ ब्राह्म-
णैः क्षत्रियैर्वैश्यैःशूद्रैश्चान्यैश्चमानवैः ॥ लोकाःकामदुघाःप्राप्तागोदानादन
घैश्चिरं ॥ ४४ ॥इतिश्रीपद्मपुराणेमलमासमाहात्म्येगोदानमहिमकीर्तनंना
मतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ श्रीलक्ष्मीरुवाच ॥ ॥यत्पुराभवताप्रोक्तंपूजनंब्राह्मणस्यच ॥ मलमासे
प्रकर्तव्यंनरैःस्वर्गेप्सुभिःसदा ॥ १ ॥ कीदृशोब्राह्मणःप्रोक्तःकथंपूज्योमलि
म्लुचे ॥ किंफलंलभतेमर्त्यःपूजनाद्वद्विजन्मनः ॥ २ ॥ ॥ श्रीविष्णुरुवा-

च ॥ ॥ देवोमुनिर्द्विजोराजावैश्यःशूद्रोबिडालकः ॥ पशुर्म्लेंच्छोथचांडा
लोविप्रोदशविधःस्मृतः ॥ ॥ श्रीरुवाच ॥ ॥ लक्षणंब्रूहिविप्राणांदेवा
दीनांसुरेश्वर ॥ कथंसञ्ज्ञायतेनाथएतदेवोच्यतांमम ॥ ४ ॥ ॥ श्रीविष्णु
रुवाच ॥ ॥ भिक्षाश्यध्यापकःश्चैवसंतुष्टोविजितेंद्रियः ॥ वेदशास्त्रार्थतत्व-
ज्ञोविप्रोदेवःप्रकीर्तितः ॥ ५ ॥ अकृष्टफलमूलाशीवनवासरतःसदा ॥ कु-
रुतेहरहःकर्मसविप्रोऋषिरुच्यते ॥ ६ ॥ तपःसत्यमहिंसाचषट्कर्माणिदिने-
दिने ॥ नभवेत्काललोपश्चसवैब्राह्मणउच्यते ॥ ७॥ अश्ववाहनतत्त्वज्ञःसंग्रा
मेनचभीःक्वचित् ॥ आरंभेनीतिमान्शूरःक्षत्रियोसौप्रकीर्तितः ॥ ८ ॥ लो-
हकर्माणिनिष्णातःपशूनांपरिपालकः ॥ कृषिवाणिज्यकर्ताचसविप्रोवैश्यउ
च्यते ॥ ९ ॥ स्नेहलाक्षतिलाजीवीक्षारंक्षीरंघृतंमधु ॥ मद्यादिविक्रयीविप्र
सशूद्रःपरिकीर्तित ॥ १० ॥ स्तेयप्रियोऽदयोलुब्धोदांभिकोलोकवंचकः ॥

हिंस्रकर्माभिकामश्चविप्रोमार्जारउच्यते ॥ ११ ॥ भक्ष्याभक्ष्येसमोयस्तु-
समोदारान्ययोरपि ॥ कृत्याकृतंनजानातिकृतघ्नोब्राह्मणःपशुः ॥ १२ ॥
वापीकूपतडागानांक्षेत्राणांचविनाशकः ॥ स्नानंसंध्याविहीनश्चसविप्रोम्लें
च्छउच्छते ॥ १३ ॥ क्रूरोलुब्धाःप्रमादीचपरद्रव्यापहारकः ॥ निर्दयःसर्व
भूतेषुविप्रश्चांडालउच्यते ॥ १४ ॥ एवंविधंद्विजवरंमलमासेतुयोऽर्चयेत्
॥ चंदनाक्षतपुष्पैश्चधूपदीपोपहारकैः ॥ १५ ॥ नैवेद्यैर्विविधैर्भक्ष्यैस्तांबूला
दिविलेपनैःपूजयेत्प्रत्यहंविप्रंसर्वशास्त्रार्थपारगम् ॥ १६ ॥ इतिहासपुरा-
णज्ञंविशेषेणतमर्चयेत् ॥ मत्परंमत्पराभिज्ञंशांतंदांतमलोलुपम् ॥ १७ ॥ पु
राणस्यचवक्तायोहरिरित्यभिधीयते ॥ तस्मैदत्तंद्विजाग्र्यायतदानंत्यायक-
ल्पते ॥ १८ ॥ योवेदसततंभक्त्यापुराणानिद्विजोत्तमः ॥ आत्मार्थेचपरार्थे-
चसहरिर्नात्रसंशयः ॥ १९ ॥ पुराणकथकोविप्रोव्यासरूपीहरिःस्वयं ॥ तद्भ-

क्तिंकुर्वतांनृणांगंगास्नानंदिनेदिने ॥ २० ॥ पुराणधर्मकथनैर्यःसमुद्धरतेनरं
॥ संसारसागरेमग्नंहरिरेवनसंशयः ॥ २१ ॥ मलमासेसमायातेयत्रक्वापि-
जलेऽमले ॥ स्नात्वाव्यासंसमभ्यर्चेत्पुरुषोत्तमबुद्धिना ॥ २२ ॥ एवंज्ञा--
त्वानरैःसेव्यःपुराणज्ञोमलिम्लुचे ॥ प्रयागादधिकंपुण्यंतस्यविप्रस्यसेवना
त् ॥ २३ ॥ यत्रसंकीर्त्यतेनित्यंमलमासकथानकं ॥ तत्रतीर्थानिसर्वाणि-
तुलस्यासहितोहरिः ॥ २४ ॥ यस्यभक्तिःपुराणज्ञेपात्रंदृष्ट्वात्वहर्निशं ॥
सएवकृतकृत्यश्चनपुनर्जायतेभुवि ॥ २५ ॥ नविद्ययाकेवलयातपसावापि
पात्रता ॥ यत्रवृत्तमिमेचोभेतद्धिपात्रंप्रचक्षते ॥ २६ ॥ प्रतिग्रहसमर्थोपि
नादत्तेयःप्रतिग्रहं ॥येलोकादानशीलानांसतानाप्नोतिपुष्कलान् ॥ २८॥ किं
चिद्वेदमयंपात्रंकिंचित्पात्रंतपोमयं ॥ पात्राणामुत्तमंपात्रंशूद्रान्नंयस्यनोदरे
२८ ॥ विद्यातपोभ्यांहीनेननतुग्राह्यःप्रतिग्रहः ॥गृह्णन्प्रदातारमधोनयत्या

त्मानमेवच ॥ २९ ॥ असंतुष्टःसकृल्लोकान्नाप्नोत्येवसुरेश्वरि ॥ अकिंचनोऽपि
संतुष्टःशेतेसर्वांगविज्वरः ॥ ३० ॥ विप्रान्स्वलाभसंतुष्टान्साधून्भूतसुहृ
त्तमान् ॥ निरहंकारिणःशांतान्नमस्येशिरसाऽसकृत् ॥ ३१ ॥ किंस्वल्पत-
पसांनृणामर्चयादेवरूपिणां ॥ दर्शनस्पर्शनप्रश्ननमस्कारार्चनादिकं॥३२
तपस्यादीनितीर्थानिभूदेवमलमासयोः ॥ पुनातितीर्थंकालेनदर्शनादेवसा
धवः ॥ ३३ ॥ नवह्निर्नचमार्तंडोनचंद्रोनचतारकाः ॥ नभूमिर्नानलोनोखं
नवायुर्नचवाङ्मनः ॥ ३४॥ उपासतांभेदवतांपुंसांघस्मरनाशनाः ॥ पुनंती
हपुनर्विप्राःसाधवःक्षणसेवया ॥ ३५ ॥ यस्यबुद्धिस्त्रिदोषादिदूषितेचकले
वरे ॥ कालादिषुचभौमेषुविकारेषुचपुण्यधी ॥ ३६ ॥ तीर्थबुद्धिर्जलेनोज्ञे-
जनेक्वचिदसौखरः ॥ लोकानुग्रहकर्तारोविप्राभुविचरंतिहि ॥ ३७ ॥ पुना
नाःपादरजसाहृदयास्थितकेशवाः ॥ देवाःक्षेत्राणितीर्थानिदर्शनात्स्पर्शना-

च्चवे ॥ ३८ ॥ शनैःपुनांतिकालेनदर्शनादेवसाधवः ॥ कृतस्वस्त्ययनोवि-
प्रैःसोहंजानोजनार्दना ॥ ३९ ॥ ब्राह्मणोजन्मनाश्रेयान्सर्वेषांप्राणिनामि-
ह ॥ तपसाविद्ययायुक्तःकिमुमद्भक्तिसंयुतः ॥ ४० ॥ नब्राह्मणान्मेदयितं
रूपमन्यच्चतुर्भुजं ॥ सर्ववेदमयोविप्रःसर्वदेवमयोह्यहं ॥ दुःप्रज्ञाअविदित्वैव
मवजानंत्यसूरयः ॥ गुरुंमांविप्रमात्मानमर्चादौभेदबुद्धयः ॥ ४२ ॥ चरा
चरमिदंविश्वंभावयत्यात्महेतवे ॥ मद्रुपाणीतिमनसिधत्तेविप्रोमदीक्षया ॥
४३ ॥ तस्माद्ब्रह्मर्षयःपूज्यानित्यंशुद्धधियत्बुधैः ॥ एवंदेव्यर्चितेविप्रेपूजितं
भुवनत्रयं ॥ ४४ ॥ दुर्जरंबतब्रह्मस्वंभुक्तमग्नेर्मनागपि ॥ नजीर्यतेपिकि-
मुतराज्ञामीश्वरमानिनां ॥ ४५ ॥ नाहंहालाहलंमन्येविषंयस्यप्रतिक्रिया ॥
ब्रह्मस्वंहिविषंप्रोक्तंनास्यप्रतिविधिक्रिया ॥ ४६ ॥ हिनस्तिविषमत्तारंवह्नि
रद्भिःप्रशाम्यति ॥ कुलंसमूलंदहतेब्रह्मस्वारणिपावकः ॥ ४७ ॥ ब्रह्मस्वंपु-

नराज्ञातंभुक्तंहंतितित्रिपुरुषं ॥ प्रसह्यतुबलाद्भुक्तंदशपूर्वान्दशापरान् ॥४८
राजानःसंपदामत्तानात्मपापंविचक्षते ॥ निरयेयेभिमन्यंतेब्राह्मगृह्णंतिबा-
लिशाः ॥ ४९ ॥ गृह्णंतियावतःपांसूनूरुदतामश्रुबिंदवः ॥ विप्राणांगतवृ-
त्तीनांवदान्यानांकुटुंबिनां ॥ ५० ॥ राजानोराजभृत्याश्चतावतोब्दान्निरंकु-
शाः ॥ कुंभीपाकेषुपच्यंतेब्रह्मदायापहारकाः ॥ ५१ ॥ स्वदत्तांपरदत्तांवा
ब्रह्मवृत्तिंहरेत्तुयः ॥ षष्टिवर्षसहस्राणिविष्ठायांजायतेकृमिः ॥ नमेब्रह्मधनं
भूयाद्यल्लब्ध्वाल्पायुषोनृपाः ॥ पराजिताश्च्युताराज्याद्भवंत्युद्वेजिनोहिये ॥
५३ ॥ विप्रंकृतागसमपिनैवद्रुह्यतमामकाः ॥ घ्नंतंबहुशपंतंवानमस्कुरुत-
मामकः ॥ ५४ ॥ यथाहंनौमिविप्रेंद्रमनुकालंसमाहितः ॥ तथानमतयूयं-
चयोन्यथामेसदंडभाक् ॥ ब्राह्मणार्थोह्यपहृतोहर्तारंपातयत्यधः ॥ अजानं
तमपिह्येनंनृगंब्राह्मणगौरिव ॥ ५६ ॥ ॥ इतिश्रीपद्मपुराणेमलमास

माहात्मेकृष्णश्रीसंवादेचतुर्थोऽध्यायः ॥ छ ॥ छ ॥ छ ॥
श्रीविष्णुरुवाच ॥ ॥ एकदोपवनंदेविजग्मुर्यदुकुमारकाः ॥ विहर्तुंसांबप्र
द्युम्नचारुभानुगदादयः ॥ १ ॥ क्रीडित्वासुचिरंकालंविचरंतःपिपासिताः ॥
जलंनिरुदकेकूपेददृशुःसत्वमद्भुतं ॥ २ ॥ कृकलासंगिरिनिभंवीक्ष्यविस्मित
मानसाः ॥ तस्यचोद्धरणेयत्नंचक्रुस्तेकृपयान्विताः ॥ ३ ॥ चर्मजैस्तांतवैः
पाशैर्बध्वापतितमर्भकाः ॥ नाशन्कुवन्समुद्धर्तुंकृष्णंचाचख्युरुत्सुकाः ॥ ४ ॥
तत्रागत्यारविंदाक्षोभगवान्विश्वभावनः ॥ वीक्ष्योज्जहारवामेनतंकरेणस—
लीलया ॥ ५ ॥ सउत्तमश्लोककराभिमृष्टोविहायसद्यःकृकलासरूपं ॥ प्रत-
प्तचामीकरचारुवर्णःस्वर्ग्युद्भुतालंकरणांबरस्रक ॥ ६ ॥ पप्रच्छविद्वानपित-
न्निदानमिमांदशांत्वंकतमेनकर्मणा ॥ संप्रापितोह्यतदर्हामभद्रामात्मानमा-
ख्याहिविवित्सतान्नः ॥ ७ ॥ इतिस्मराजासंपृष्टःकृष्णेनानंतमूर्तिना ॥ नृगो

वैप्रणिपत्याहकिरीटेनार्कवर्चसा ॥ ८ ॥ ॥ नृगउवाच ॥ नृगोनामनरेंद्रोह-
मिक्ष्वाकुतनयःप्रभो ॥ दानिष्ठाख्यायमानेषुयदितेकर्णमस्पृशं ॥ ९ ॥ किं
तुतेविदितंनाथसर्वभूतात्मसाक्षिणे ॥ कालेष्वव्याहतदृशोवक्ष्येऽथापितवा-
ज्ञया ॥ १० ॥ यावंत्यःसिकताभूमौयावंत्योदिवितारकाः ॥ यावंत्योवर्षधारा
श्चतावतीरददंस्मगाः ॥ ११ ॥ पयस्विनीस्तरुणीःशीलरूपगुणोपपन्नाःक
पिलाहेमशृंगीः ॥ न्यायार्जितारौप्यखुराःसवत्सादुकूलमालाभरणाददावहं
॥ १२ ॥ स्वलंकृतेभ्योगुणशीलवद्भ्यःसीसत्कुटुंबप्रधृतव्रतेभ्यः ॥ तपोभृतो
ब्रह्मविदांबरिष्ठास्तेभ्यःप्रादांह्यनिशंभाक्तियुक्तः ॥ १३ ॥ गोभूहिरण्यायतना
निहस्तिनःकन्याश्वदासीःकिलरौप्यशय्याः ॥ वासांसिरक्तानिपरिच्छदा-
निरथाश्चयज्ञैश्चरितंचपूर्तैः ॥ १४ ॥ कस्यचिद्द्विजमुख्यस्यभ्रष्टागौर्ममगो-
धने ॥ संपृक्ताविदुषासाचमयादत्ताद्विजातये ॥ १५ ॥ तांनीयमानांतत्स्वा-

मीदृष्ट्वावचनमब्रवीत् ॥ ममेतिप्रतिग्राहीवैनृगोमेदत्तवानिति ॥ १६ ॥ विप्रौ
विवदमानौतावूचतुःस्वार्थकामुकौ ॥ भवान्दातापहर्तावैतच्छ्रुत्वामेऽभवद्भ्र
मः ॥ १७ ॥ अनुनीतावुभौविप्रौधर्मकृच्छ्रगतेनवै ॥ गवांलक्षंप्रकृष्टानांदा-
स्याम्येषाप्रदीयतां ॥ १८ ॥ भवंतावनुगृण्हीतंकिंकरस्याविजानतः ॥
समुद्धरतमांकृच्छ्रात्पतंतंनिरयेऽशुचौ ॥ १९ ॥ नाहंप्रतीच्छेवैराजन्नित्युक्त्वा
गतवांस्तदा ॥ नान्यद्गवामप्ययुतमिच्छामीत्यपरोययौ ॥ २० ॥ एतस्मिन्नं
तरेयाम्यैर्दूतैर्नीतोयमक्षयं ॥ यमेनपृष्टस्तत्राहंदेवदेवजगत्पते ॥ २१ ॥ यम
उवाच ॥ पूर्वंत्वमशुभंभुंक्ष्वउताहोनृपतेशुभं ॥ नांतोदानस्यधर्मस्ययस्यलो-
कस्यभास्वतः ॥ २२ ॥ मयोक्तंपूर्वमशुभंभोक्ष्येप्राहपतेतिसः ॥ तावदद्राक्ष
मात्मानंकृकलासंपतन्प्रभो ॥ २३ ॥ ब्रह्मण्यस्यवदान्यस्यतवदासस्यकेश
व ॥ स्मृतिर्नाद्यापिविध्वस्ताभवत्संदर्शनार्थिन ॥ २४ ॥ सत्वंकथंममविभो

क्षिपथःपरात्मायोगेश्वरैःश्रुतिदृशामलहृद्विभाव्यः ॥ साक्षादधोक्षजउरु-
व्यसनांबुधेस्मसंदर्शनंइहनयस्यभवापवर्गः॥ २५॥ देवदेवजगन्नाथगोविं
दपुरुषोत्तम॥नारायणहृषीकेशपुण्यश्लोकाच्युताव्यय॥ २६ ॥ अनुजानीहि
मांकृष्णयामिदेवगतिंविभो ॥ यत्रक्कापीहमच्चेतोभूयान्मेत्वत्पदास्पदं॥२७॥
इत्युक्त्वातंपरिक्रम्यपादौस्पृष्ट्वास्वमौलिना ॥ अनुज्ञातोविमानाग्र्यमारोह-
त्पश्यतांनृणां ॥ २८ ॥ कृष्णःपरिजनंगृह्यभगवान्देवकीसुतः ॥ ब्रह्मण्यदे-
वोधर्मात्माराजानमनुशिक्षयन् ॥ २९ ॥ श्रीविष्णुरु० ॥ एवंविभाव्यभग-
वान्मुकुंदोद्वारकौकसः ॥ पावनःसर्वलोकानांविवेशनिजमंदिरं ॥ ३० ॥ स
द्भिःसमागमोराजन्कदाचिन्नाफलोभवेत् ॥ विमुक्तोनरकाद्राजानृगःसा--
धुसमागमात् ॥ ३१ ॥ साधूनांदर्शनंस्पर्शःकीर्तनंस्मरणंतथा ॥ तीर्थानामि
वपुण्यानांतत्सर्वंपावनंस्मृतं ॥ ३२ ॥एतच्छ्रुत्वात्वयाभद्रेसद्योह्यस्माःपरं--

तथा ॥ ब्रह्मस्वंनचहर्तव्यंयदीच्छसिपरांगतिं॥ ३३ ॥ इतिश्रीपद्मपुराणे-
मलमासमहात्म्येपंचमोध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥
॥ श्रीरुवाच ॥ ॥ भगवन्मलमासेवैदीपदानस्ययत्फलं ॥ तत्सर्वंब्रूहिमे
देवलोकानांहितकाम्यया ॥ १ ॥ कृतेदीपेफलंकीदृग्रक्षणेकिंफलंलभेत् ॥ के-
नैवविहितंपूर्वंकोमुक्तोयोनिसंकटात् ॥ २ ॥ केनद्रव्येणकर्तव्यःकियंतंका-
लमेवच ॥ कतिभिस्तंतुभिर्देवदिनानिकातिसंख्यया ॥ ३ ॥ श्रीविष्णु० ॥
॥ शृणुदेविप्रवक्ष्यामिरहस्यंपापनाशनं ॥ यत्कृत्वापितृहागोघ्नोब्रह्महागुरु-
तल्पगः ॥ ४ ॥ विघातीकूटसाक्षीवासर्वपापकरोपिवा ॥ मुच्यतेनात्रसंदे
होविष्णुलोकंसगच्छति ॥ ५ ॥ कृतेनयेनशुद्धात्मामुक्तिमाप्नोतिशाश्वतीं॥
शतंकुलानामुद्धृत्यवसतेसहभास्करैः ॥ तदहंसंप्रवक्ष्यामिदीपदानंमलि-
म्लुचे ॥ मासमात्रंप्रकर्तव्योदीपःपापप्रणाशनः ॥ ७॥ घृतेनदीपयेद्दीपांति

लतैलेनवासितं ॥ अखंडंदीपकंकुर्यात्सप्तभिस्तत्रतंतुभिः ॥ ८ ॥ प्रतिप-
द्दिनमारभ्ययावद्दर्शादिनंभवेत् ॥ असंक्रातौसमायातेमासेवैपुरुषोत्तमे ॥ ९
उषस्युत्थायमुदितःकामक्रोधविवर्जितः ॥ संगमेषुचनद्यांवानिर्झरेषुन्हृदे-
षुवा ॥ १० ॥ वापीकूपतडागेषुगृहेवाशीतवारिणा ॥ उष्णोदकेनवाकार्यं
स्नानंशुद्धिपरैर्नरैः ॥ ११ ॥ संपूर्णफलदंसम्यक्स्नानमुष्णेनवारिणा ॥ शी
तेद्विगुणमेवस्यात्कूपेतच्चचतुर्गुणं ॥ १२ ॥ वाप्यामष्टगुणंप्रोक्तंतडागेदश
धास्मृतं ॥ ततोदशगुणंप्रोक्तंन्हृदेचनिर्झरेदश ॥ १३ ॥ नद्यांदशगुणंप्रोक्तं
महानद्यांततोदश ॥ सहस्रगुणितंप्रोक्तंमहानद्योश्चसंगमे ॥ १४ ॥ मंत्रेणाने
नकर्तव्यंस्नानंशुद्धतिलैःसह ॥ धातकीफलचूर्णेनगोमूत्रसहितेनच ॥ १५
अथस्नानमंत्रः ॥ देवदेवहृषीकेशसुरासुरनमस्कृत ॥ पापक्षयायमासेस्मि
न्स्नानार्थमहमुद्यतः ॥ १६ ॥ संपादयत्वविघ्नेनपुरुषोत्तमतेनमः ॥ पुष्करा

द्यानितीर्थानिस्मरेत्स्नानोद्यतःसदा॥ १७ ॥ मालतीनलिनीसीतानंदिनी-
चमलापहा ॥ विष्णुपादाग्रसंभूतागंगात्रिपथगामिनी ॥ १८ ॥ भागीरथी
हैमवतीजान्हवीत्रिदशेश्वरी॥ द्वादशैतानिनामानियत्रयत्रजलाशये॥१९
स्नानोद्यताःस्मरिष्यंतितत्रतत्रमदाज्ञया ॥ स्नातास्तेसर्वतीर्थेषुसर्वप्रस्रवणे
षुच ॥ २० ॥ नदीषुदेवखातेषुस्नानंभवतुमेसदा ॥ एवंस्नात्वातथाचम्य
परिदध्याच्चवाससी ॥ २१ ॥ यत्पुरानरनारीभिस्त्रिवर्णैर्यदघंकृतं ॥ मलमा
सेसमायातेकंपत्यश्वत्थपर्णवत्॥२२॥ सप्तजन्मार्जितंपापंस्नानेनैकेनगच्छ
ति ॥ दशजन्मार्जितंपापंपर्वणिस्नानतोव्रजेत् ॥ २३ ॥ शतजन्मोत्थितंपा
पंमासार्धेनैवगच्छति ॥ जन्मांतरसहस्रैस्तुयदघंसमुपार्जितं ॥ २४ ॥ वि-
धिनास्नानमात्रेणमासेनविलयंव्रजेत् ॥ येनकुर्वंतिसुभगेसेचनंचमलिम्लु-
च्ने ॥२५॥ दुःखदारिद्र्यपंकौघानिःसरंतिनतेक्वचित् ॥ तस्मात्सर्वात्मनादे

विस्नातव्यंमलमासके ॥ २६ ॥ मलापकर्षकोमासोमलमासस्ततोबुधैः ॥ नि
र्धारितोवसिष्ठाद्यैःपुराणैर्वेदचिंतकैः ॥ २७ ॥ मलंतुपातकंनामस्नानदाना
दिदीपकैः ॥ क्रियतेभस्मसात्सर्वंपुरुषोत्तमपूजकैः ॥ २८ ॥ सर्वेषांपुण्यमास
नामयमेवाधिकोमतः ॥ स्नानदानादिकंपुण्यमक्षय्यंमत्प्रसादतः ॥ २९ ॥
अस्मिन्मासेप्रकर्तव्यमनंतफलमीप्सुभिः ॥ किंबहूक्तेनकमलेकमलाकांक्षि
भिर्नरैः ॥ ३० ॥ ततःपूर्वाह्निकंसर्वंसमाप्यपुरुषोत्तम ॥ मत्स्यादिनामभि-
र्गंधपुष्पधूपादिनार्चयेत् ॥ ३१ ॥ ततस्तुस्थापयेत्कुंभमव्रणंतोयपूरितं ॥
तदग्रेस्थापयेद्दीपंताम्रपात्रेसुसंस्कृते ॥ ३२ ॥ घृतेनदीपयेद्दीपंतिलतैलेन
वापुना ॥ सप्तभिस्तंतुभिश्चैवपंचांगुलप्रमाणतः ॥ ३३ ॥ प्रतिष्ठाप्यततो-
दीपंपूजयेद्विधिनाततः ॥ कुंभंचपूजयेदेवंततःसंकल्पमाचरेत् ॥ ३४ ॥ दी
परस्तमोनाशयतिदीपःकांतिंप्रयच्छति ॥ तस्माद्दीपप्रदानेनप्रीयतांपुरुषोत्त

मः ॥ ३५ ॥ अविद्यातमसाव्याप्तेसंसारेपापगर्भिते ॥ ज्ञानमोक्षप्रदोदीप
स्तस्माद्दत्तोमयातव ॥ ३६ ॥ गृहाणेमंमयादत्तंसुदीपंपुरुषोत्तम ॥ प्रसाद
सुमुखोभूत्वावांछितार्थप्रदोभव ॥ ३७ ॥ प्रतिष्ठाप्यततःकुंभंपूजयेच्चंदना
दिना ॥ मनसाहर्षयुक्तेनबहुमंगलसंयुतः ॥ ३८ ॥ कस्तूरीकुंकुमोपेतंकर्पू
रागरुसंयुतं ॥ गृहाणदेवदेवेशचंदनंरोचनान्वितं ॥ ३९ ॥ कालोद्भवानि-
पुष्पाणिसुगंधीनिबहूनिच ॥ पद्मानिश्वेतरक्तानिगृहीत्वासुमुखोभव ॥ ४०
कृष्णागरुयुतंधूपंगुग्गुलैर्मधुरान्वितं ॥ गृहाणपरयाभक्त्यामयादत्तंसुरेश्व-
र ॥ ४१ ॥ कुर्यादारार्तिकंदीपंपूजयेद्दिक्पतींस्तथा ॥ गृहाणदेवदेवेशदत्त
मारार्तिकंमया ॥ ४२ ॥ फलानिस्वादवंतीहऋतुकालोद्भवानिच ॥ मयाद
त्तानिदेवेशफलैःसुफलदोभव ॥ ४३ ॥ नानाविधानिचान्नानिघृतपक्वानि-
यानिच ॥ लेह्यंपेयंतथाचोष्यंभक्ष्यंबहुगुणान्वितं ॥ ४४ ॥ सुभोज्यंषड्रसो

पेतंगृह्वाणान्नंसुसंस्कृतं ॥ मयादत्तंसुरश्रेष्ठसुतृप्तोवांछितंकुरु ॥ ४५ ॥ वेला
कर्पूरकंकोललवंगाद्यैःसुसंस्कृतं ॥ तांबूलंमुखवासार्थंत्वंगृह्वाणसुरेश्वर ४६
आरार्तिकंततःकुर्यात्प्रादक्षिण्याभिवादनं ॥ शक्त्याकिंचित्प्रदातव्यंनित्य-
मेवसमाचरेत् ॥ ४७ ॥ भोजयेद्ब्राह्मणान्भक्त्याभक्त्यादद्याच्चदक्षिणां ॥ रा
त्रौजागरणंकुर्यान्मासांतेप्रीतिपूर्वकं ॥ ४८ ॥ अनेनविधिनायेवैदीपंकुर्वंति
मानवाः ॥ तेयांतिपरमंस्थानंपुनरावृत्तिदुर्लभं ॥ ४९ ॥ गोभूहिरण्यदानानां
यत्फलंलभतेनरः ॥ तत्फलंसमवाप्नोतिदीपदोनात्रसंशयः ॥ ५० ॥ दीप
दःकांतिमाप्नोतिदीपदोधनमुत्तमं ॥ दीपदोज्ञानमाप्नोतिदीपदोमोक्षमव्य-
यं ॥ दीपदाताचसौभाग्यंविद्यामत्यंतनिर्मलां ॥ आरोग्यंपरमामृद्धिंलभ-
तेनात्रसंशयः ॥ ५२ ॥ दीपदश्चशुभांभार्यांसर्वलक्षणसंयुतां ॥ पुत्रपौत्रां- 
न्प्रपौत्रांश्चसंततिश्चाक्षयाभवेत् ॥ ५३ ॥ ब्राह्मणःपरमंज्ञानंक्षत्रियोराज्यमु

त्तमं ॥ वैश्योधनपशून्सर्वान्शूद्रःसुखमवाप्नुयात् ॥ ५४ ॥ कुमारीचापिभर्ता
रंसर्वलक्षणसंयुतं ॥ प्राप्नोतिपरमायुश्चपुत्रपौत्रसमान्विता ॥ ५५ ॥ वैधव्य
नैवयुवतिःकदाचिदपिपश्यति ॥ नवियोगमवाप्नोतिदीपदानप्रभावतः ॥
५६ ॥ आधयोव्याधयश्चैवदीपदानात्प्रणाशिताः ॥ भीतोभयात्प्रमुच्येतब
द्धोमुच्येतबंधनात् ॥ ५७ ॥ ब्रह्महत्यादिभिःपापैर्दीपदानप्रभावतः ॥ मु-
च्यतेनात्रसंदेहोब्रह्मणोवचनंयथा ॥ ५८ ॥ चांद्रायणानिकृच्छ्राणिचरितानि
नसंशयः ॥ येनास्मिन्नधिकेमासिततोदीपःसुलोचने ॥ ५९ ॥ दीपंप्रज्व-
लितंदृष्ट्वायेनंदंतिनरोत्तमाः ॥ तेयांतिपरमंस्थानंयत्सुरैरपिदुर्लभं ॥ ६० ॥
दीपस्यज्वलनेबुद्धिंयोददातिमलिम्लुचे ॥ सर्वपापविनिर्मुक्तोविष्णुलोकंस
गच्छति ॥ ६१ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनं ॥ यस्यस्मरणमात्रे
णसर्वपापैःप्रमुच्यते ॥ ६२ ॥ पुरासरस्वतीतीरेसुशर्मानामवैद्विजः ॥ भि

क्षाचाररतोनित्यंकुटुंबपरिपालकः ॥ ६३ ॥ विष्णुंसंपूज्याविधिवद्दीपंसंपा-
दयन्सदा ॥ एवंप्रवर्तमानस्यसद्भक्तस्यसुशर्मणः ॥ ६४ ॥ कदाचित्तस्यभव
नपूजांकृत्वामीलम्लुचे ॥ हृदिसंस्मृत्यदेवेशंरात्रौचस्थिरताऽभवत् ॥ ६५
समागच्छतिमार्जारोमूषकार्थमहर्निशं ॥ एकादशीदिनेप्राप्तेमलमासस्यशो
भने ॥ ६६ ॥ पुरुषोत्तममभ्यर्च्यरात्रौजागरणेस्थितः ॥ अर्धरात्रेसमया
तोमार्जारोमूषकाशनः ॥ ६७ ॥ मंदतेजसिदीपेतुमूषकार्थसमुद्यतः ॥ त-
स्यपादप्रहारेणदीपःसंवर्धितोनिशि ॥ ६८ ॥ प्रातर्ममारमार्जारःकेनचि-
त्कारणेनवै ॥ विमानवरमारूढोगतोहरिपुरंप्रति ॥ ६९ ॥ दीपप्रभावाद्दी
प्तोसौजातोभुविसमृद्धिमान् ॥ पुत्रपौत्रैःपरिवृतोधनधान्यसमृद्धिमान् ॥
७० ॥ आरोग्यंपरमामृद्धिमवापमहतींश्रियं ॥ मलमासेप्रदीपाच्चसुशर्मा- १७
मोक्षमाप्तवान् ॥ ७१ ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येदीप

महिमवर्णनंनामषष्ठोऽध्यायः ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥ छ ॥
॥ श्रीरुवाच ॥ ॥ देवेश्वररमानाथपुनर्दीपफलंवद ॥ यथायेनकृतोदीपोवि
ध्वस्तेःकिंचपातकं ॥ १ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ पुनरन्यत्प्रवक्ष्यामिदीप
स्यफलमुत्तमं ॥ दीपविध्वंसनेपुण्यंसर्वंनश्यतियत्कृतं ॥ २ ॥ पुरामधुवनेवि
प्रोह्यासन्नाम्नाचशाकलिः ॥ सदाचारवतस्तस्यगृहेभार्याद्वयंशुभं ॥ ३ ॥ वि
मलैकासुशीलान्यापातिव्रत्यपरायणा ॥ शुभाचाररतेचोभेपतिप्रियहितेर -
ते ॥ ४ ॥ तस्यैवंवर्तमानस्यधार्मिकस्यद्विजन्मनः ॥ मलमासःसमायातःपु-
रुषोत्तमवल्लभः ॥ ५ ॥ एकदानिर्गतागेहात्सुशीलाशीलसंयुता ॥ प्रातरेका
गतासातुजलार्थंयमुनांनदीं ॥ ६ ॥ स्नानार्थमुद्यतंलोकंदृष्ट्वाप्रोवाचसापतिं
साध्वीमधुरयावाचाविनयान्नतकंधरा ॥ ७ ॥ ॥ सुशीलोवाच ॥ ॥ भगवन्प्र-
ष्टुमिच्छामिक्रोधंकर्तुंनचार्हसि ॥ अद्यकःपुण्यदिवसोलोकोयातिरवेःसुतां ॥

८॥ ॥शाकलिरुवाच॥ ॥ श्रुणुभद्रेप्रवक्ष्यामियदर्थंयांतिनागराः ॥ असं
क्रांतःसमायातोमासःश्रीपतिवल्लभः ॥ ९ ॥ मलिम्लुचइतिख्यातोह्यक्षय्यः
पुण्यसंपदां ॥ प्रबोधयंतियेदीपंविष्णुलोकेवसंतिते ॥ १० ॥ दीपप्रदोमले-
मासेनपुनर्जायतेभुवि ॥ तस्माद्भद्रेप्रकर्तव्यंस्नानंभक्तिमभीप्सुभिः ॥ ११
कर्तव्योदीपकोऽखंडोयावत्त्रिंशद्दिनावधि ॥ फलंतस्यनशक्नोतिवक्तुंदेवश्च-
तुर्मुखः ॥ १२ ॥ ॥सुशीलोवाच ॥ ॥ममापिमनसोत्साहःकर्तुंदेवतवा--
ज्ञया ॥ भर्तुराज्ञाकृतंकर्मसफलंभुविजायते ॥ १३ ॥ ॥शाकलिरुवाच ॥
कुरुदेविप्रसन्नोहंस्नानंदीपंचयत्नतः ॥ नत्वत्समापरानारीपतिप्रियहितेरता
॥ १४ ॥ भर्तुराज्ञामुपादायप्रसन्नेनांतरात्मना ॥ स्नानंतरणिजातोयेकृतं-
दीपःप्रबोधितः ॥ १५ ॥ संपूज्यदीपकंनित्यंभर्तारंप्रतिपूज्यच ॥ भर्तुःशेष-
मनुज्ञातंहविर्मत्वाचभुंजति ॥ १६ ॥ एवंतयासुव्रतिन्याव्रतमारब्धमुत्तमं॥

विमलाविमनाजाताग्रहकार्यंकरोतिन ॥ १७॥ सपत्नीद्वेषमापन्नातनयाभि
परिप्लुता ॥ किंकृत्वासुखंमेस्याद्व्रतेविघ्नंकथंभवेत् ॥ १८ ॥ दीपमाशुप्रशम-
येतैलंदीपाद्धराम्यहं ॥ निर्धारितंतयैवेत्थंमनसाक्षुब्धमिच्छया ॥ १९ ॥ ए
कैववसतीगेहेविमलापाककारिणी ॥ ग्रहद्वारंपिधायैवंशमयामासदीपकं ॥
२० ॥ तैलंदीपादपहृतंपुनर्द्वारिसमागता ॥ सुशीलाग्रहमागत्यदीपंचालो-
क्यदुःखिता ॥ २१ ॥ ततोद्वितीयेदिवसेसुशीलानिर्गताग्रहात् ॥ सोपिवि
प्रोबहिर्यातोग्रहकार्यार्थमेवहि ॥ २२ ॥ पुनःसंबोधयामासदीपकंदुःखिता-
भृशं ॥ एवंदेवंहृदिध्यात्वाग्रहकर्मरताभवत् ॥ २३ ॥ विलोक्यावसरंदुष्टा-
फूत्कारेणप्रशाम्यति ॥ एवंतयाचसर्पिण्यादीपध्वंसमहर्निशं ॥ २४ ॥ लु-
प्तोदीपोहृतंतैलंमहद्विघ्नंकृतंतया ॥ साध्व्यासुशीलयाज्ञातंनचोक्तंचशुभा-
शुभं ॥ २५ ॥ भर्तृदेवप्रसादाभ्यांपालितंव्रतमुत्तमम् ॥ संभोज्यब्राह्मणान्-

भक्त्याशक्त्यादत्वाचदक्षिणां ॥ २६ ॥ दीपनिर्नाशनात्सद्योविमलादुःखिता
ऽभवत् ॥ तस्याःपुत्रत्रयंनष्टमंधत्वंसमुपागता ॥ २७ ॥ अदीर्घेणैवकालेन-
निधनंसमुपागता ॥ त्रिंशद्वर्षसहस्राणिरौरवेनरकेस्थिता ॥ २८ ॥ तत्पाप
योगेनपुनर्जातासाग्रामसूकरी ॥ पुनर्जातावनेव्यालीशृगालीवल्गुलीपुनः ॥
२९ ॥ गृहगोधापुनर्जातानिषादीमद्रमंडले ॥ मंडलाकारकुष्ठेनजातासाग
लितेनवै ॥ ३० ॥ एवंतयाविमलयादीपप्रशमनात्फलं ॥ प्राप्तंदुःखंवियोगेन
सुशीलासद्गतिंगता ॥ ३१ ॥ संस्थाप्यसंततिंभूमौवैकुंठनिलयंगता ॥ सायु-
ज्यंपतिसंयुक्तापुनरावृत्तिदुर्लभं ॥ ३२ ॥ नारीवापिनरोवापियःकरोतिमलि-
म्लुचे ॥ स्नानंवादीपकंवापिविप्रसेवनमेवच ॥ ३३ ॥ नतस्यजायतेजन्मन
पुनर्गर्भवेदना ॥ यःपठेच्छृणुयाद्वापिसोपितत्फलभाग्भवेत् ॥ ३४ ॥ इतिश्रीप १९
द्मपुराणेमलमासमाहात्म्येदीपमहिमवर्णनंनामसप्तमोध्यायः ॥ ७ ॥

॥ श्रीरुवाच ॥ भगवन्भवतापौघहारिन्नानंदविग्रह ॥ मलमासेत्वशक्तानां-
स्नानादौकिंशुभंनृणां ॥१॥कृतेनैकेनतेमुक्ताभवंतिवदसांप्रतं॥मलमासकृतं
प्रातः स्नानादौसकलंफलं ॥ २ ॥ लभंतेचनरानार्यस्तत्किंशोभनमुत्तमं ॥ र
हस्यकर्मकृपयावदाविश्वार्तिहारक ॥ ३ ॥ श्रीकृष्णउवाच ॥ शृणुसाध्विप्रव
क्ष्यामिलोकानुग्रहकारिणि ॥ सम्यक्प्रश्नःकृतःसर्वलोकोपकृतिकारकः ॥४॥
नराणांचैवनारीणांसर्वेषामात्मनःप्रिये ॥ सर्वदासर्वदानोत्थफलदंसार्वका-
मिकं ॥ ५ ॥ यज्ञादिफलदंसर्वंकथयामिसनातनं ॥ रहस्यंसर्वराजाख्यंनैष्क
र्म्यफलदायकं ॥ ६ ॥ अपिकर्मफलौघानांदाहकंभवतारकं॥ अशक्तानांवि-
शेषेणमलमासेविशेषतः॥७॥हरेर्नामहरेर्नामकीर्तनंकथितंबुधैः॥ येनकेनप्र
कारेणसर्वकामाप्तिसाधनं॥८॥कृष्णकृष्णेतिकृष्णेतिस्वपन्जाग्रत्तथानिशि॥
जपन्नितिकलौनित्यंकृष्णरूपीभवेन्नरः ॥९॥ कृष्णकृष्णेतिकृष्णेतिप्रत्यहंव

क्तिवैकलौ॥ नित्यंयज्ञायुतंपुण्यंतीर्थकोटिफलंलभेत्॥१०॥यस्तुपुत्रःशुचिर्द-
क्षःपूर्ववयसिधार्मिकः॥ विष्णुकीर्तनसंयुक्तस्तंपुत्रंकवयोविदुः॥ ११॥ स्ना
त्वागायंतिगोमत्यांकृष्णंकलिमलापहं॥ नतेषांविषयेदूतागच्छंतियमकिंक-
राः॥ १२॥ येवैद्विजातयोनित्यंक्षत्रियाश्चविशस्तथा॥ त्रिवर्णपूजासंयुक्ताः
शूद्राश्चान्येशरीरिणः॥ १३॥ पठंतिगीतामग्रेतेमुक्तास्तत्रनसंशयः॥ म्ले
च्छतुल्यस्वभावास्तेयेनभक्तामममानघे॥ १४॥ संकीर्णयोनयःपूतायेभक्ताम
मभामिनि॥ कुदेशोपिभवेत्पुण्योयत्रभागवतःकलौ॥ १५॥ नास्तिनास्ति
महाभागेयुगंहिकलिनासमं॥स्मरणात्कीर्तनाद्यत्रप्राप्यतेपदमव्ययं॥१६॥
स्त्रीराजबालघातीचयेचविश्वासघातकाः॥ सर्वापहारीपापिष्ठोमार्गघ्नोग्राम
दाहकः॥ १७॥ मातृगामीसुरापीचसुतघ्नःसर्वनिंदकः॥ मातृहापितृहाचै-
वभ्रूणहागुरुतल्पगः॥ १८॥ एतेचान्येचपापिष्ठामहापापमृताश्चये॥ सर्व-

तेचमध्येचविष्णुःसर्वत्रगीयते ॥ ३७॥ इतिश्रीपद्मपुराणेमलमासमाहात्मे
नामकीर्तनमहिमानामाऽष्टमोध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ छ ॥
श्रीरुवाच ॥ ॥ देवदेवदयासिंधोवदकिंचिदथोद्भुतं ॥ मलमासेनचीर्णेन
भवेत्सकलसत्कृतं ॥ १ ॥ श्रीविष्णुरु० ॥ शृणुक्षीरोदतनयेसर्वदानंददायि-
नि ॥ सर्वोपरिदयादृष्टेसर्वानुग्रहकारिणि ॥ २ ॥ नपसांचैवसर्वेषांयत्तपःपरम
व्ययं॥यदाःचरंतिमनुजाःसर्वघ्नंतितदाह्यघं॥३॥सर्वधर्मफलंलब्ध्वागच्छंति
पदमव्ययं ॥ तदहंसंप्रवक्ष्यामिलोकानुग्रहहेतवे ॥ ४॥ अन्नंहिप्राणिनांप्रा-
णाअन्नेलोकाःप्रतिष्ठिताः ॥ अन्नंवीर्यंबलंनामसर्वदेवमयंतथा ॥ ५॥तद्दत्तंये-
नवैपुंसानदत्तांकिंशशिस्वसः ॥ गुणिनेवादरिद्रायक्षुधितायजनायच ॥ ६ ॥
तेनात्मसुखसिद्धौतुसत्कृतंसर्वभोगतः॥तदन्नंयेनसंदत्तंतावद्यावन्ममप्रिये॥
७॥तेनसांसारिकंसर्वंकिलत्यक्तंमुमुक्षुणा ॥ अथवाफलकामेनयादितद्दत्तमाद

रात् ॥८॥सर्वकर्मफलान्यस्यहस्तगान्येवसर्वदा॥तस्मात्सर्वप्रयत्नेनमासेऽ
धिकसमाव्हये॥ ९ उपवासव्रतंकुर्यात्सर्वकामफलाप्तये॥ मासोपवासंवाकु-
र्यात्पक्षेतुह्युपवासकं ॥ १० ॥ षड्रात्रंवात्रिरात्रंवाव्रतमेकांतरंतुवा ॥ एकंवा-
प्युपवासंतुशक्तितस्तुसमाचरेत् ॥ ११ ॥ नरोवायदिवानारीकुमारीवाकु
मारकः॥ ज्वरवान्वाथवृद्धोवाविधवातुविशेषतः १२॥ एकेनाप्युपवासेनकृ
तकृत्योभवेदिह ॥ अत्रतेकथयिष्यामिकथांपौराणिकींशुभां॥१३॥ यांश्रुत्वा
सर्वलोकानांविश्रंभःपरमोभवेत्॥ अस्तिश्रीनर्मदातीरेपुरीमाहिष्मतीकिल
॥ १४॥ तत्रकाचिन्महाभागाब्राह्मणीह्यभवत्पुरा॥ नाम्नासातापसीख्या
ताकर्मणाचापितादृशी॥ १५॥ तपश्चचारविपुलंमलमासोपवासिनी॥ त-
स्याःकदाचित्समयेसखीकाचित्तदाज्ञया ॥ १६ ॥ कर्मकर्त्रीसमाख्याता
कुष्टयुक्तान्नखंजिका॥ अभवत्सामुमूर्षुर्वैजातातत्समयेतथा ॥ १७॥ सोचे-

पापैः प्रमुच्यंते कृष्णरामेति कीर्तनात् ॥ १९ ॥ किं वेदैः श्रद्धयाधीतैर्व्याख्यातै
रपि कृत्स्नशः ॥ धर्मशास्त्रादिभिश्चैव योगशास्त्रैश्च किं भवेत् ॥ २० ॥ सेतिहासैः पु
राणैश्च व्रतदानैर्जपादिभिः ॥ सप्तद्वीपादिभूदानैर्दानैश्चान्यैश्च कृत्स्नशः ॥ २१ ॥
गजाश्वरथदानैश्च देवालयप्रतिष्ठया ॥ सेवितैः क्षेत्रतीर्थादितपोभिर्विविधैश्च
किं ॥ सर्वेश्वरस्य कृष्णस्य यस्मृतिर्मे यस्य जायते ॥ २२ ॥ कलौ दोषनिधौ कांते गुण
स्त्वेको महान् भुवि ॥ कीर्तनादेव कृष्णस्य मुक्तो बंधात्परं व्रजेत् ॥ २३ ॥ कलिं-
संभावयंत्यार्या गुणज्ञाः सारभागिनः ॥ यत्र संकीर्तनेनैव सर्वः स्वार्थो हि लभ्य-
ते ॥ २४ ॥ हरेर्नामैव नामैव नामैव मम जीवनं ॥ कलौ नास्त्येव नास्त्येव नास्त्येव ग
तिरन्यथा ॥ २५ ॥ घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते ॥ वासुदेवपरास्ते वै कृता
र्था नात्र संशयः ॥ २६ ॥ ते सभाग्या मनुष्येषु कृतार्थाः कमलालये ॥ स्मरंति स्मार
यंत्येव मन्नामानि मलिम्लुचे ॥ २७ ॥ हरिनामपरा ये च घोरे कलियुगे रमे ॥ तए

वकृतकृत्याश्चनकलिर्बाधतेहितान् ॥ २८॥ शिवपूजाकरायेचशिवनामपरा
यणाः॥ तएवकृतकृत्याश्चनकलिर्बाधतेहितान्॥ २९ ॥ घोरेकलियुगेप्राप्ते
सर्वकर्मबहिष्कृते॥ हरिकीर्तनमेवात्रसंपूर्णफलदायकं ॥ ३० ॥ नाम्नोस्ति
यावतीशक्तिः पापनिर्हरणेहरेः॥ तावत्कर्तुंनशक्नोतिपातकंपातकीजनः॥३१
हरिर्हरतिपापानिदुष्टचित्तैरपिस्मृतः॥ अनिच्छयापिसंस्पृष्टोदहत्येवहिपाव
कः ॥३२॥सकृन्नारायणेत्युक्त्वापुमान्कल्पशतैरपि॥ गंगादिसर्वतीर्थेषुस्नातो
भवतिनित्यशः ॥ ३३ ॥ अशक्तेनापिशक्तेनकलौकामिनिमत्प्रिये ॥ मासि-
नामान्यविरतंममग्राह्याणिमानवैः॥ ३४॥ सर्वकामाश्चमुक्तिश्चहस्ततेतेषांव
राननेः॥ येस्मरंतिनरानित्यंनाममेसर्वरूपिणः ॥ ३५॥ सकृदुच्चरितंयेनहरि
रित्यक्षरद्वयं॥ बद्धःपरिकरस्तेनमोक्षायगमनंप्रति॥ ३६ ॥ आलोड्यसर्वशा
स्त्राणिविचार्यचपुनःपुनः॥ इदमेवसुनिष्पन्नंध्येयोनारायणःसदा॥ आदावं

विप्रसहचरींमह्यंकिंचित्तपोर्पय ॥ येनाहंचसुखंभुक्त्वासंसृतेःपारमाप्नुयाम् ॥
॥ १८॥ दयापरासिभूदेविसख्यंतेसार्थकंकुरु ॥ इत्युक्तासातयासख्यातताप-
सीकरुणापरा ॥ १९ ॥ ददावेकोपवासस्यमलमासकृतस्यवै ॥ फलंससलि-
लंहस्तेदत्तमात्रेदिवस्तले ॥ २० ॥ विमानंमहदायातंदिव्यभोगसमन्वितं ॥
तदारूढातुतद्यानंतापसीस्वसखीमियं ॥ २१ ॥ स्तुत्वाबहुविधैर्वाक्यैर्जगा
मत्रिदशालयं ॥ बहुकालंमहाभोगान्भुक्त्वाचैवभुवस्तले ॥ २२ ॥ काशी
नाथसुतात्वंचलब्ध्वातत्रापिशंबहु ॥ भुक्त्वादेहांविसृष्टौतुपुनःशंकरलोकगा
॥ २३ ॥ लोकानुग्रहणार्थायकाश्यांचंद्रेश्वरीपुनः ॥ वर्ततेद्यापिविबुधैर्वंद्या
लोकैस्तुपूजिता ॥ २४ ॥ मलमासदिनैकस्यफलंप्राप्तासखीकरात् ॥ का-
श्यांस्थास्यतिसाशूद्रीयावदाचंद्रतारकं ॥ २५ ॥ एवंगुणोमलोमासोदासो-
प्यस्मिन्व्रतीसुरः ॥ भवेद्यथासादास्येकाजाताशिववधूसमा ॥ २६ ॥ तस्मा-

देकोपवासोवैकर्तव्यःशुभमिच्छता ॥ परत्रेहचसंसारभीरुणाचारुहासिनि
२७॥ इतिश्रीपद्मपु०मलमासमाहात्म्येउपवासकथनोनामनवमोध्यायः॥९
लक्ष्मीरुवाच॥ भगवन्ब्रूहिमेसर्वंमलमासस्ययत्फलं॥ उपवासस्यसामर्थ्यंये
षांनास्तिमलिम्लुचे ॥ १ ॥ किंकर्तव्यंनरैस्तैस्तुकथंपापक्षयोभवेत्॥ तद्व-
दस्वसुरश्रेष्ठकृपांकृत्वाममोपरि॥ २ ॥ श्रीकृष्णउवाच॥ शृणुदेविप्रवक्ष्या
मिव्रतंपापप्रणाशनं ॥ येषामुपोषणेशक्तिर्नास्तिकिंचिच्चभक्षणे ॥ ३ ॥ तैरे
कभक्तंकर्तव्यंहविष्यान्नेननित्यशः॥ तथामौनंचकर्तव्यमनंतफलमीप्सुभिः
॥ ४ ॥ उपवासेनयत्पुण्यंतत्पुण्यंमौनभोजने॥ मौनेनसर्वपापेभ्योनरोमुच्ये
दसंशयं ॥ ५ ॥ मौनाद्भवतिसौभाग्यंमौनाद्रूपंप्रजायते ॥ मौनात्प्रवर्धतेकी
र्तिस्तस्मान्मौनंसमाचरेत् ॥ ६ ॥ मौनात्कलहहानिःस्यान्मौनादायुःप्रवर्ध
ते ॥ मौनाच्चैवाप्यतेसौख्यंतस्मान्मौनंसमाचरेत् ॥ ७ ॥ त्रिषुमौनंसदाका,

र्यस्नानेहोमेचभोजने ॥ मौनेनयत्फलंदेवित्रिषुस्थानेषुतच्छृणु ॥ ८ ॥ स्नाने
नप्राप्यतेतेजोजुव्हानःश्रियमुत्तमां ॥ भुंजानोलभतेचायुस्तस्मान्मौनंसमा
चरेत् ॥ ९॥ एतेषुत्यजतोमौनंपुरुषस्याल्पमेधसः ॥ आयुःश्रेयःश्रियोयांति
तस्मान्मौनंसमाचरेत् ॥ १० ॥ स्नातस्यवरुणस्तेजोजुव्हतोग्निःश्रियंहरेत्॥
भुंजतोमृत्युरायुष्यंतस्मान्मौनंसमाचरेत् ॥ ११ ॥ लक्ष्मीरुवाच ॥ मौनं-
कतिविधंप्रोक्तंकियंतंकालमेवच ॥ एतत्सर्वंसविस्तारंब्रूहिमेवदतांवर ॥१२
श्रीकृष्णउवाच ॥ मौनंतुद्विविधंप्रोक्तंपापघ्नंममतुष्टिदं ॥ प्रथमंभोजनांतं-
चप्राणाहुत्यंतमेवच ॥ १३ ॥ प्रथमंपूर्णफलदंकिंचिन्न्यूनंद्वितीयकं ॥ मौ
नाच्छीलमवाप्नोतिसर्वपापैःप्रमुच्यते ॥१४॥यःकरोतिनरोमासेमौनमक्षय्य
मश्नुते॥ प्रायश्चित्तंपरंह्येतन्महापातकनाशनं ॥ १५ ॥यंयंकामयतेकामंतंतं
प्राप्नोतिमानवः ॥ नारदेनपुरामौनात्प्राप्तंज्ञानमतींद्रियं ॥ १६ ॥ सत्संग-

त्सत्कृपालोकान्मौनव्रतप्रभावतः॥संत्यज्यदासीपुत्रत्वंब्राह्मणत्वमुपागतः॥
१७॥मलापकर्षकेमासेस्नानंचक्रेदिनत्रयं॥कुरुक्षेत्रेततोजातोब्रह्मणोमानसः
सुतः ॥ १८ ॥ सर्वंफलंचमौनेनतिथिनक्षत्रयोस्तुतं॥ इष्टापूर्तफलंतस्यमल
मासेतुमौनतः ॥१९॥ मासानांमलमासोयंश्रेष्ठःसर्वाधिकःस्मृतः ॥ किंस्या
त्तीर्थयात्राभिःक्लेशात्यंतप्रदायिभिः ॥ २० ॥ एकतोमलमासोयमेकतो-
द्वादशाब्दिकं ॥ समानमत्रनभवेत्किंपुनर्मौनभोजनात् ॥ २१ ॥ एकतःपृ-
थिवीदानमेगतोमौनभोजनं ॥ नसमंचात्रकथितंशिवेनब्रह्मणामया ॥ २२॥
एकतःसर्वदानानिमलमासस्तथैकतः ॥ तुलयातोलितंदेविनसमानिमलि-
म्लुचे ॥ २३॥ धन्योवैमानवोलोकेयःस्नातिमलमासके॥ ततोधन्यतमःसो
पिदीपदःपुरुषोत्तमे॥ २४ ॥ मौनव्रतीततोधन्यःस्नानेवैभोजनार्चने॥ आ
जन्मतःकृतात्पापान्मुच्यतेनात्रसंशयः ॥ २५ ॥ व्याजेनापिकृतंदेविव्रतंवै-

पुरुषोत्तमे ॥ तस्यदर्शनमात्रंतुपुनातिसकलंजगत् ॥ २६ ॥ मलिम्लुचंकृते
यैस्तुमद्भक्त्यामौनभोजनं ॥ स्वर्गमोक्षफलावाप्तेस्तस्यासिद्धिर्नसंशयः ॥२७
उपवासेनयत्पुण्यंजायतेशतवत्सरात् ॥ तत्पुण्यंलभ्यतेदेविमौनेनैकेनमान-
वैः ॥ २८ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येमौनव्रतफलकथनोनामद-
शमोध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
श्रीकृष्णउ० ॥ ॥ अत्रापिकथयिष्येहमितिहासंपुरातनं ॥ यच्छ्रुत्वासर्वपा
पेभ्योमुच्यतेनात्रसंशयः ॥ १ ॥ पुराह्यवंतिविषयेब्राह्मणःशंसितव्रतः ॥ वेद
शर्मेतिनाम्नावैख्यातःसूर्यइवापरः ॥ २ ॥स्वाध्यायनिरतःशांततपसादग्धकि
ल्बिषः ॥ निरीहोनिरहंकारोनिर्ममोविजितेंद्रियः ॥ ३ ॥ तस्येत्थंवर्तमानस्य
स्वधर्मनिरतस्यच ॥ मलमासःसमायातःकदाचित्कालपर्ययतात् ॥ ४ ॥ मन
साचिंतयामाससद्विजःकिंकरोम्यहं ॥ शरीरेनास्तिसामर्थ्यमुपवासस्यमेधु-

नां ॥ ५ ॥ कृत्वायदुपवासस्यसम्यक्फलमवाप्नुयां ॥ इतिचिंतयतस्तस्यनि
द्रयापहृतस्यच ॥ ६ ॥ स्वप्नमध्येसमागत्यकथितंमौनभोजनं ॥ त्यक्त्वानि-
द्रांसमुत्थायआनंदाश्रुकुलेक्षणः ॥ ७ ॥ समौनमशनंचक्रेयावन्मासःसमा-
प्यते ॥ मासांतेदर्शदिवसेप्रातश्चोद्यापनंकृतं ॥ ८ ॥ तस्यानुग्रहकामार्थमा
गतःपुरुषोत्तमः वरेणच्छंदयामाससवव्रेवरमुत्तमं ॥ ९ ॥ भुविभक्तिंपरांचैवप्रे
म्णाभक्तजनस्यच ॥ तज्जन्मनिपरंसौख्यंचक्रवर्तित्वदुर्लभं ॥ १० ॥ नाना
विभवभोगांश्चमहादानविधायिनां ॥ द्विजानांनित्यसेवांचमनोवाक्कायकर्म-
भिः ॥ ११ ॥ दीनेष्वनुग्रहंचैवपरदुःखनियंतृतां ॥ अरोगतांशरीरस्यस्वज
नस्यावियोगतां ॥ १२ ॥ धनंधान्यंगृहेक्षेत्रेशरीरेयोग्यतांतथा ॥ स्वदेहेनतु
वैकुंठदर्शनंसुरदुर्लभं ॥ १३ ॥ एवंनानाविधाभोगावरामत्तोहिचार्थिताः ॥
दत्तामयासुमनसाव्रतेनपरितोषिणा ॥ १४ ॥ अंतर्धानमतश्चक्रेतंद्विजंपरि

तोष्यवै ॥ मय्यंतर्धानमापन्नेतेनभुक्तंसुखंबहु ॥ १५ ॥ इष्टंबहुविधैर्यज्ञैःपू-
र्तंबहुविधंकृतंनानादानानिदत्तानिसुहृदःसुखिनःकृताः ॥ १६ ॥ तदिच्छया
तुकालेनविमानंप्रेषितंमया ॥ नानाभोगैःसमाकीर्णंकाम्यमानंसुरैरपि ॥ १७
उपविश्यविमानंवैवैकुंठंप्रतिनिर्ययौ ॥ आगच्छतस्ततस्यदिविपूजांचक्रुर्दि
वौकसः ॥ १८ ॥ धन्यस्त्वंकृतकृत्यश्चयेनेदंव्रतमुत्तमं ॥ मौनादिकंकृतंविप्रत-
स्येदंफलमीदृशं ॥ १९ ॥ इंद्रस्तमाहसंपूज्यदेहिमेकिंचिदीप्सितं ॥ मौन-
व्रतैकदिनजंफलंकृत्वाकृपांमयि ॥ २० ॥ तेनदत्तंफलंतस्मैदिनैकस्यदया
लुना ॥ तत्प्रभावात्सुरेंद्रेणदुष्टोवृत्रोनिषूदितः ॥ २१ ॥ सविप्रोद्यापिवैकुंठेव
सतेबहुसौख्यभाक् ॥ एवंकृत्वाधिकेमौनंव्रतीकिंलभतेनवै ॥ २२ ॥ इतिश्री
पद्मपुराणेमलमासमहात्म्येमौनव्रतफलकथनोनामैकादशोध्यायः ॥ ११ ॥
श्रीरुवाच ॥ मलिम्लुचेदृषीकेशपुराणपुरुषोत्तम ॥ पंचपर्वकृतंनृणांकिंफलं

म० २६ स्याद्वदाच्युत ॥ १ ॥ इतिपृष्टस्तयादेव्याभगवानादिपुरुषः ॥ उवाचवच- अ०
नंध्यात्वापंचपर्वकथानकं ॥ २ ॥ श्रीकृष्णउवाच ॥ शृणुदेविप्रवक्ष्यामिपर्वा १२
णितुयथाक्रमं ॥ वैधृतिश्चव्यतीपातोराकाचैवकुहूस्तथा ॥ ३ ॥ द्वादशीपं-
चपर्वाणिपरंश्रेष्ठान्यनुक्रमात् ॥ तुष्यामिवैधृतौचाहंव्यतीपातेतुधर्मराट् ॥
॥ ४ ॥ पितामहःपौर्णमास्यांपितरोमादिनेशुभे ॥ वैधृतौस्नानहोमाभ्यांदा-
नेनकमलालये ॥ ५ ॥ अहंविष्णुर्मनुष्याणांवांछितार्थंददामिवै ॥ वैधृतेश्च
फलंदेविदेवानामपिदुर्लभं ॥ वैधृतौयत्प्रदत्तंहिधनंधान्यंफलादिकं॥ तिलाः
सर्पिःपयश्चैवतेषामंतोनविद्यते ॥ ७ ॥ वैधृतौचाक्षयंपुण्यंसंक्रांत्यधिकम-
च्युत ॥ निमिषेनिमिषेकांतेवर्धतेनात्रसंशयः ॥ ८ ॥ मलमासेविशेषेणम-
त्प्रियेचारुहासिनि ॥ तस्यपुण्यप्रभावेनप्रल्हादोदैत्यनायकः ॥ ९ ॥ इंद्रत्वं
प्राप्तवान्कांतेत्रिषुलोकेषुविश्रुतं ॥ अन्यायादेवताःसर्वावैधृतेर्दानयोगतः २६

॥ १० ॥ देवत्वमुपपन्नास्ता त्रिषुलोकेषुविश्रुतं ॥ सर्वत्रपूज्यतांप्राप्ता अहन्य-
हनिभूतले ॥ ११ ॥ तद्वद्व्रतीसमाप्नोतिकुलेमहतिपूज्यतां ॥ वैधृतेर्दानमा-
हात्म्यसंख्यावर्षशतैरपि ॥ १२ ॥ वक्तुंनशक्यतेदेविब्रह्मणाचपुराकृतं ॥ वै
धृतीन्सकलान्देविप्रतिमासंव्रतंचरेत् ॥ १३ ॥ घृतेनपयसावाथमधुनासि
तयाथवा ॥ तिलचूर्णैर्नारिकेलैर्द्वादशद्वादशापिवा ॥ १४ ॥ वैधृतौदुःख-
साकल्यवर्जितोसौभवेत्सदा ॥ पूगंपत्रंषोडशकंयोदद्याद्वैधृतौनरः ॥ १५ ॥
षोडशाब्दंषडाधिक्यंसंख्ययाजायतेहितत् ॥ एकेनाचरितेनापिवैधृतेनमलि
म्लुचे ॥ १६ ॥ पुर्वोक्तंसकलंपुण्यंजायतेनात्रसंशयः ॥ वैधृतेर्दानमाहात्म्यं
संख्ययाकथितंतव ॥ १७ ॥ अतस्तत्कथयिष्यामिव्यतीपातेचयत्फलं ॥
सदावैयोगराजोयंख्यातः सूर्यसमप्रभः ॥ १८ ॥ धर्मोधर्मेनसंप्राप्तोव्यती
पातप्रभावतः ॥ लोकेषुधर्मतांप्राप्तस्त्रिषुलोकेषुवल्लभः ॥ १९ ॥ सूर्याचंद्र-

मसोर्योगादुत्पन्नःसपुराकिल ॥ पूर्वंपुराणेवाराहेविस्तरात्कथितंमया ॥२०॥
अधुनातन्नशक्नोमिबहुवक्तुंयथाफलं ॥ प्रीणातिधर्मराजोयमत्रदानेनसुंदरि
॥ २१ ॥ कुरुक्षेत्रेरवौग्रस्तेदानंदत्वाद्विजोत्तमे ॥ व्यतीपातेतथादत्तंमास-
संख्यंविवर्धते ॥ २२ ॥ चक्रतीर्थेतथाकाश्यांमरणेयत्फलंलभेत् ॥ तत्फला
दधिकंप्रोक्तंव्यतीपातेतुदानतः ॥ २३ ॥ एकतःसर्वदानानिसर्वपर्वसुनि-
त्यशः ॥ एकतस्तुषमात्रंतुपातेहेमसदक्षिणं ॥ २४ ॥ सर्वदानाधिकंपुण्यं-
व्यतीपातप्रभावतः ॥ प्रतिमासंविवर्धेतसंख्यातेभ्यःशताधिका ॥ २५ ॥
तस्मिंस्तपःनभावेनऋषयःस्वर्गवासिनः ॥ तत्रदत्तेनसुप्रीताःसदाभुंजंति-
पूर्वजाः ॥ २६ ॥ धान्यंदत्तंव्यतीपातेहिरण्यंवाऽब्धिजेरवौ ॥ अनंतफलदं
सर्वमग्निहोत्रफलंयथा ॥२७॥ भाद्रपदेऽमावास्यायांगंगायांयत्फलंस्मृतं ॥
तत्फलंचाधिकेप्रोक्तंव्यतीपातेद्विजार्पितं॥२८॥व्यतीपातमहायोगस्त्रिषुलो

केषुविश्रुतः॥धन्यास्तेमानवालोकेपातेयैस्तुद्दिजार्पितं॥२९॥धान्यंकिंचित्सु
वर्णवाश्रद्धयासहितंप्रिये॥ तेभ्यःकोटिगुणंपुण्यंसंख्यादानस्यनास्तिहि॥
३०॥ तिलपात्रंतत्रदत्तंप्राणांतेहंसमर्पयेत्॥ धान्यंधन्यतमास्तेहितथाम
द्रतकारकाः॥ ३१॥ मलिम्लुचेव्यतीपातेएकस्मिन्नपियत्कृतं॥ स्नानदा
नादिकंदेविवक्तुंकेनचशक्यते॥ ३२॥ स्वल्पेप्यस्मिन्कृतेपुण्येव्यतीपाते-
मलिम्लुचे॥ पुण्यानामप्यनेकानांफलंभवतिनिश्चितं॥ ३३॥ तस्मिन्मलि
म्लुचेपातेयेनकेनापिमानवैः॥ दानंदेयंविशेषेणसंसारभयभीरुभिः॥३४॥
एतत्तेकथितंदेविव्यतीपातेफलंहितत्॥ संक्षेपेणमयोक्तंतेविस्तरेणनशक्य
ते॥ ३५॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येपंचपर्ववर्णनोनामद्वाद-
शोऽध्यायः॥ १२॥ ॥ छ॥ ॥ छ॥ ॥ छ॥
श्रीलक्ष्मीरुवाच॥ ॥ भगवन्मेव्यतीपातविभागेषुचयत्फलं॥ तद्ब्रूहित्वं

विशेषेणसमासेनजगद्गुरो ॥ १ ॥ श्रीकृष्णउवाच ॥ ॥ व्यतीपातेतुसकलेपु
ण्यंस्यान्महदेवहि ॥ तथाचतारतम्यंवैभागेभागेबुधैस्मृतं॥ २ ॥तत्तेहंसंप्रव
क्ष्यामिशृणुष्वहृदयंगमे॥ दर्शेशतगुणंदानंतच्छतंतुदिनक्षये॥३॥ शताच्छ
तंचसंक्रांतौशतोत्थंविषुवेषुच ॥ युगादौतच्छतगुणमयनेतच्छताधिकं॥४॥
सोमग्रहेशतगुणंतच्छतंतुरविग्रहे ॥ असंख्यत्वंव्यतीपातेदानंदानविदोवि-
दुः ॥ ५ ॥ उत्पातेलक्षगुणितंभ्रमणेकोटिरुच्यते ॥ अर्बुदंपतनेप्रोक्तमक्षय्यं-
पतितेफलं ॥ ६ ॥ जन्मद्वाविंशतिर्नामभ्रमणंचैकविंशतिः ॥व्यतीपातस्यप-
तनेदशसप्तास्थितिंविदुः ॥७॥समर्पितंयद्व्यतिपातकालेपुनःपुनस्तद्रविरुष्ण
रश्मिः॥प्रयच्छतेकल्पशतार्बुदानिविवर्धमाननंनहिहीयतेतत् ॥८ ॥ शुभंव्य
तीपातदिनेवगाहंसपंचगव्येनमहानदीजले ॥ उपासतेयोयमुनानदीजलंज
प्येचशुद्धोव्यतिपाततेनमः ॥ ९ ॥ पूजाविधिंपुरस्कृत्यकृनकृत्योभवेन्नरः॥

मलिम्लुचेविशेषेणतस्मात्कार्यौमनीषिभिः ॥ १० ॥ पूर्णमास्याःफलंवक्ष्ये-
ब्रह्मणःप्राप्तिहेतवे ॥ प्रीतेब्रह्मणिसुप्रीताःसर्वेपित्रिदिवौकसः ॥ ११ ॥ स्ना
नंकृत्वाद्विजातिभ्यःप्रदातव्यंसुवर्णकं ॥ यद्यदिष्टतमंवस्तुस्थावरंजंगमंत-
था ॥ १२ ॥ वैशाखीकार्तिकीमाघीरौद्रीब्राह्मीचवैष्णवी ॥ विशेषफलदा-
स्तिस्रःपिंडदानेऽक्षयंफलं ॥ १३ ॥ यद्व्रतंपूर्णमास्यांतुसर्वमश्नंतिदेवताः॥
पौर्णिमायांविदुःप्राज्ञादेवानांकेवलोविधिः ॥ १४ ॥ अश्नंतिदेवाःपितरोदैवे
कर्मण्यमादिने ॥ माध्यांतुमाधवोदेवोफाल्गुन्यांरजनीकरः ॥ १५ ॥ चैत्र्यां
तुदेवोह्यानंदोवैशाख्यांपितृदेवता ॥ ज्येष्ठ्यांतुब्रह्मासावित्रीआषाढ्यांतुवि-
शेषतः ॥ १६ ॥ मार्ग्यांतुदेवपितरोमनुष्यायक्षकिन्नराः ॥ देवीभवानीपौ-
ष्यांतुप्रीताभवतुसर्वदा ॥ १७ ॥ पैत्रकंमुनिभिःप्रोक्तममावास्यादिनंयथा
॥ दिनंतथापौर्णिमासंदैविकंपरिकीर्तितं ॥ १८ ॥ पर्वभिस्तुकृतैरन्यैर्बहुभिः

म० किंप्रयोजनं॥ यद्येकवासरोमर्त्यैःश्रद्धयापरिसेव्यते ॥ १९ ॥ यावज्जीवं- अ०
२९ मर्त्यलोकेस्नानदानादिभिःकृतैः॥ स्नानेनैवैकेनपूर्णायांदिनंभवतिसार्थकं॥२० १३
ऋणान्मुक्तोनरोदैवात्पैतृकाद्दर्शकेदिने ॥ स्नानंकर्तुंनशक्तोयोदिनंप्रतिसुरे-
श्वरि ॥ २१ ॥ तेनकार्यंपौर्णिमास्यांस्नानंवैपितृतर्पणं॥ पौर्णिमायाःफलंस-
र्वंकथितंसकलंप्रिये ॥ २२ ॥ अमावास्याफलंतद्वत्पितृणांप्रीतिवर्धनं॥ पर्वा
णामुत्तमंपर्ववक्ष्येसंक्षेपतस्तव ॥ २३ ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्र-
संशयः ॥ अमावास्यासमंदेविनास्तिपर्वजगत्त्रये॥ २४॥ मासांतेबहुलासा-
पिपितृणांमुक्तिदायिनी ॥ त्रयोदशगुणंदानंदर्शेतावद्दिनानिच ॥ २५॥ व-
र्धतेप्रत्यहंसत्यंनात्रकार्याविचारणा॥ मासिमासित्वमावास्यादिनेप्राप्तेनरा
धमः ॥ २६ ॥ योहिदद्यान्नपिंडांस्तुनसपुत्रःपितानसः॥ शीतार्तायद्वदिच्छं 
तिक्षुधाक्षामायथानराः ॥२७॥ तद्वतीच्छंतिपितरःसंप्राप्तेचेंदुसंक्षये ॥ नि

र्वपंतिव्ययश्राद्धंप्रतीताःपुत्रकाःप्रिये॥ २८ ॥ इंदुक्षयेमासिमासिब्रह्महाजा
यतेहिसः॥ योनकुर्यान्नुमासांतेपितॄणांपिंडपातनं॥ २९ ॥ सदावांछंतिसु
प्रीताःपुत्रपौत्रपशूंस्तथा॥ वनस्पतिगतेसोमेनकुर्यात्पितृतर्पणं॥ ३० ॥ तं
मासंपितरस्तस्यकुर्वंतोवायभोजनं॥ तस्येविघ्नंप्रयच्छंतिक्षुधितास्तृषिता-
स्तथा॥ ३१ ॥ तेसंततिंनाशयंतिसंपदोभवनानिच॥ तस्मादमायांकर्तव्यं
स्नानदानजपादिकं॥ ३२ ॥ मलिम्लुचेविशेषेणमहापुण्यप्रदंस्मृतं॥ किं-
बहूक्तेनदेवेशिनरैःकार्यंमहाव्रतं॥ ३३ ॥इतिश्रीपद्मपुराणेमलमासमाहात्म्ये
पंचपर्ववर्णनोनामत्रयोदशोध्यायः॥ १३ ॥ ॥ छ ॥ ॥ छ ॥
श्रीलक्ष्मीरुवाच॥ ॥ पुरुषोत्तमहृषीकेशभक्तिप्रियदयानिधे॥ द्वादश्याश्चै
वमाहात्म्यंवदलोकहितायच॥ १ ॥ ॥ श्रीकृष्णउवाच॥ शृणुदेविप्रव--
क्ष्यामिद्वादशीफलमुत्तमं॥ मलमासेविशेषेणमुनिभिर्भाषितंपुरा॥ २ ॥

म० पर्वणामुत्तमंपर्वसर्वसंपत्प्रवर्धनं ॥ यच्छ्रुत्वासर्वपापेभ्योनरोमुच्येदसंशयं॥ अ०
३० ३ ॥ संक्षेपतोदानफलंश्रुत्वाकृच्छ्रात्प्रमुच्यते ॥ सर्वतीर्थानिनार्हंतिद्वाद- १४
श्याःषोडशींकलां ॥ ४ ॥ तावद्गर्जंतितीर्थानितावद्यज्ञक्रियाःकिल ॥ ताव
द्गर्जंतिपर्वाणियावन्नायातिद्वादशी ५ उपोष्यैकादशींयस्तुपारणेद्वादशीदि
ने ॥ धात्रीमूलेपिंडदानंकरोतिपुरुषोत्तमः ॥ ६ ॥ कृतायज्ञाखिलास्तेनग-
यायांपिंडपातनं ॥ अहोधन्यास्तेचधन्यायेषांबुद्धिर्हरेर्दिने ॥ ७ ॥ तुलसी
पत्रमिश्रान्नंमक्षिकापादमात्रकं ॥ द्वादश्यांब्राह्मणेदत्तंतदन्नंमेरुतांव्रजेत् ॥
८ ॥ द्वादश्यांपारणेयस्तुतोयदानंकरोतियः ॥ तत्तोयंसागरैस्तुल्यंसप्तभिः
सागरात्मजे ॥ ९ ॥ द्वादश्यांयोदिनेप्राप्तेतर्पणंकुरुतेप्रिये ॥ जलंतदमृती
भूयपितॄणामुपतिष्ठति ॥ १० ॥ दिनमेकंहरेर्यस्तुनकरोतिचवाहनं ॥ तस्य- ३०
क्षेत्रेखिलंधान्यमक्षयंचभवेत्प्रिये ॥ ११ ॥ द्वादशीदिनमेकंतुवाहनंनकरो-

तियः ॥ विमानैःसत्रजन्स्वर्गंयाम्यंनायातिदुर्गमं ॥ १२ ॥ हरेस्तुदिवसेप्रा
प्तेभूमिदानंकरोतियः ॥ शतकल्पावधितस्यवैकुंठेवसतिर्भवेत् ॥ १३ ॥
हेरस्तुदिवसेप्राप्तेदत्तंवस्त्रंद्विजायते ॥ तेषांवासोष्टकल्पंच चंद्रस्यभवनेऽक्ष
यः ॥ १४ ॥ माधवस्यादिनेप्राप्तेकपिलांयःप्रयच्छति ॥ उद्धृतास्तेनपि-
तरोधेनोरोम्णांचसंख्यया ॥ १५ ॥ मुकुंददिवसेप्राप्तेविद्यादानंकरोतियः ॥
सचिरंवसतेस्वर्गेपुनरावृत्तिदुर्लभं ॥ १६ ॥ उपानहंधनंवस्त्रंयोददातिमलि
म्लुचे ॥ द्वादश्यांद्वादशीनाथोददातिसर्वमीप्सितं ॥ १७ ॥ द्वादश्यांयस्तु
कृष्णायांमलमासेविशेषतः ॥ ददात्युपानहौयाम्यान्सदूतांन्नैवपश्यति १८
पादुकेरत्नखचितेकारितेकनकादिभिः ॥ योयच्छतिसुविप्रायवैकुंठेवसतेचि
रं ॥ १९ ॥ पट्टकूलंचकार्पासंकौशेयंतृणसंभवं ॥ ऊर्णिकंचौष्ट्रिकंदत्वास-
वसेत्तंतुवत्सरं ॥ २० ॥ घृतंगव्यंमाहिषंचददातिद्वादशीदिने ॥ वैकुंठेवसते

दिव्येयावदाभूतसंप्लवं ॥ २१॥ येनकेनाप्युपायेनघृतंदेयंमलिम्लुचे ॥ द्वाद
श्यांतुविशेषेणकृष्णायांसुविशेषतः ॥ २२ ॥ घृतदानफलंशक्यंमयावक्तुंन
सुंदरि ॥ यद्घृतंदेवताभोज्यंरसेष्वतिरसोत्तमं ॥ २३ ॥द्वादश्यप्रस्थसंख्या
कंद्वादश्यांघृतमुत्तममं ॥ द्वादश्यामधिमासेवैद्वादशीशस्यतुष्टये ॥ २४ ॥
ददातितस्यतिंकार्यंद्वादशीनांशतैरपि ॥ द्वादश्यहर्मुखेयोगेतुष्टिर्विष्णोर्म-
हात्मनः ॥ २५ ॥ शतभाराज्यदोरामेमहाराज्याधिकारवान् ॥ भवेदत्रनसं
देहःसत्यंसत्यंवदाम्यहं ॥ २६ ॥ अल्पस्यापिहिदानस्यघृतस्यवरवर्णिनि
॥ यथाशक्त्याप्रदत्तस्यवित्तशाठ्यंविनाजने ॥ २७ ॥ फलंसर्वेप्सितकरमै
हिकामुष्मिकोद्भवं ॥ भोगंसम्यक्ददात्येवंसाकृपाममसुंदरि ॥ २८ ॥ यो-
ददातिघृतंविप्रोद्वादश्यांचमलिम्लुचे ॥ घृतधेनुसहस्रैस्तुदत्तैर्माध्यांतुय-
त्फलं ॥२९॥ तत्फलंलभतेनूनंयथावैघृतिकंबलैः ॥ पापकोटिसहस्राणिपा-

पकोटिशतानिच ॥ ३० ॥ संक्षयंयांतिदेवेशीद्वादश्यांघृतदानतः ॥ गव्यं-
कोटिगुणंपुण्यंमाहिषंलक्षमात्रकं ॥ ३१ ॥ कापिलंतुघृतंदत्तमनंतंद्वादशी-
दिने ॥ कृतंयेनमहद्भक्त्याघृतदानंद्विजन्मने ॥ २२ ॥ कुलानितारयत्येवपू
र्वेषांसप्तवैस्वयं ॥ दत्ताश्वस्वर्णसंभूतप्रतिमादक्षिणान्विताः ॥ ३३ ॥ घृतं-
दत्वाधिकेमासिद्वादश्यांकिमुशोच्यते ॥ बहुनोक्तेनकिंदेविसर्वदानतपःफ-
लं ॥ ३४ ॥ स्वल्पेनघृतदानेनद्वादश्यांभक्तिपूर्वकं ॥ द्विजन्मनेप्रदत्तेनप्रा
प्यतेनात्रसंशयः ॥ ३५ ॥ एतत्तेकथितंदेविपंचपर्वप्रसंगतः ॥ द्वादश्यांघृ-
तदानंतुसर्वयज्ञाधिकंस्मृतं ॥ ३६ ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहा
त्म्येकृष्णश्रीसंवादेपंचपर्वकथनेद्वादशीमहिमानामचतुर्दशोऽध्यायः ॥ १४
॥ श्रीकृष्णउवाच ॥ ॥ मलिम्लुचसमोमासोनतिथिर्द्वादशीसमा ॥ नान्न
दानसमंदानंनदेवःपुरुषोत्तमात् ॥ १ ॥ द्वादश्यामन्नदानंवैयःकरोतिसुम-

ध्यमे ॥ तेनैवतारिताःसर्वेनरकाच्छतपूर्वजाः ॥ अन्नदःपुरुषोलोकेप्राणदा-
तास्मृतोबुधैः ॥ अन्नमाश्रित्यतिष्ठंतिजीवाब्रह्मांडगोलके ॥ ३ ॥ चैत्रवैशा
खयोर्वारिइंधनंपौषमाघयोः ॥ स्वकालेपुण्यफलदमन्नंसर्वत्रसर्वदा ॥४॥ उप
रागसहस्राणिव्यतीपातायुतानिच ॥ अमालक्षंतुद्वादश्याःकलांनार्हंतिषो-
डशीं ५ ॥ द्वादश्यांयत्कृतंसर्वमक्षयंतद्भवेदिह ॥ द्वादश्यामक्षयंदानंद्वाद-
श्यामक्षयोजपः ॥ ६ ॥ द्वादश्यामक्षयंस्नानंद्वादश्यामक्षयंतपः ॥ द्वाद-
श्यामक्षयोहोमोद्वादश्यांसर्वमक्षयं ॥ ७ ॥ ऋषिभिःसर्वगंधर्वैःशिवेनब्रह्मणा
मया ॥ निर्धारितंपुराह्येतद्द्वादश्यानसमंभुवि ॥ ८ ॥ तिथीनामधिपाःसर्वेब्र
ह्मणानिर्जराःकृताः ॥ यच्छंतितेफलंनित्यंद्वादश्याःफलदोह्यहं॥९॥नगंगान
गयाताद्दग्याद्दशीद्वादशीतिथिः ॥ तिथीनामुत्तमाज्ञेयास्नानदानादिनाभृशं
१० ॥ निधीनामधिपोजातःकुबेरोद्वादशीव्रतात् ॥ इंद्रत्वंदेवराट्प्राप्तःप्र-

जासंयमनंयमः ॥ ११ ॥ द्वादश्यामाधिमासस्ययःकरोतिस्मार्चनं ॥ वस्त्र-
मन्नंघृतंवापिदेयंमत्प्रीतिहेतवे ॥ १२ ॥ तेधन्याःकृतकृत्याश्चतैःप्राप्तं-
जन्मनःफलं ॥ सर्वार्थोधिगतस्तैस्तुयैर्दत्तंद्वादशीदिने ॥ १३ ॥ कलायाम
पिद्वादश्यामन्नदानंकरोतियः ॥ सौभाग्यंवर्धतेतस्यतस्यायुर्नैवहीयते ॥ १४
पापकोटिसहस्राणिपापकोटिशतानिच ॥ विलयंयांतिदेवेशिमलमासेतिथौ
मम ॥ १५ ॥ माघस्नानसहस्रैस्तुप्रयागेयत्फलंलभेत् ॥ तत्फलंलभतेदेवि
द्वादश्यांचमलिम्लुचे ॥ १६ ॥ षण्णवत्यांकुरुक्षेत्रेकपिलाशतदानतः ॥ र-
वौग्रस्तेफलंयच्चतत्फलंद्वादशीदिने ॥ १७ ॥ योन्नंसर्षपमात्रंचददातिद्वाद
शीदिने ॥ तदन्नंमेरुतांयातिकिंपुनर्मलमासके ॥ १८ ॥ सकर्पूरंचतांबूलंद्वा
दश्यांयःप्रयच्छति ॥ यावत्कर्पूरकणिकाःपत्रसंख्याचयावती ॥ १९ ॥ ता
वत्कल्पंनिवसतिपितृभिःपरिवारितः ॥ विष्णुलोकेमुदायुक्तःस्तूयमानस्तु-

योगिभिः ॥ २० ॥ नतेषांपरिवृत्तिस्तुविष्णुलोकात्कथंचन ॥ असंक्राताव
न्नदानंयैःकृतंद्वादशीदिने २१॥ त्रिषुलोकेषुतीर्थानिपुण्यान्यायतनानिच ॥
तिष्ठंतितावत्कालंहियावद्वैद्वादशीतिथिः ॥ २२ ॥मादेविद्वारकांयाहिप्रयागं
काशिकामपि ॥ इहैवकुरुमद्भक्त्याद्वादश्यांद्वादशीव्रतं ॥ २३ ॥ नकरोति-
नरोमोहाद्दानंवैद्वादशीदिने ॥ दुःखदारिद्र्यरोगाणामास्पदंसोभिजायते २४
नद्वारकानोज्जयिनीनकाशीमथुरापिच ॥ गंगाद्वारंनकांचीवानायोध्याद्वाद-
शीसमा ॥ २५ ॥ शुक्लावायदिवाकृष्णाउभयोरंतरंनहि ॥ ममप्रीतिकरालो-
केतिथिर्नद्वादशीसमा ॥ २६ ॥ किंतस्यतीर्थैस्तपसासुपुण्यैर्वाकिमध्वरैः ॥
मलिम्लुचेसितपक्षेद्वादश्यामन्नदस्यच ॥ २७ ॥ द्वादश्यांप्रातरुत्थायभक्त्या
संपूज्यमामपि ॥ घृताद्युपस्करयुतंदेयमन्नंद्विजोत्तमे ॥ २८ ॥ अन्नदाना-
त्परंदानंनभूतंनभविष्यति ॥ किंबहूक्तेनदेवेशिनतिथिर्द्वादशीसमा ॥ २९

यस्यमासस्ययोदेवोद्वादश्यांतंप्रपूजयेत् ॥ असंक्रांतावहंपूज्योनाम्नावैपुरु--
षोत्तमः ॥ ३० ॥ प्रदद्याद्वस्त्रयुग्मंचउपवीतंतथाघृतं ॥ उपानहौचदेवेशि
द्वादश्यांमलमासके ॥ ३१ ॥ द्वादश्यामधिमासस्यफलंवक्रशतैरपि ॥ कृत
दानस्यकमलेवक्तुंकेनापिभूतले ॥ ३२ ॥ इत्येतत्कथितंदेविद्वादशीमहिमा
नकं ॥ मलमासस्यसुभगेश्रुतंसर्वार्थसाधनं ॥ ३३ ॥ ॥ इतिश्रीपद्मपुराणे
मलमासमा॰पंचपर्वकथनेद्वादशीमहिमवर्णनंनामपंचदशोऽध्यायः ॥ १५ ॥
॥ श्रीरुवाच ॥ ॥ भगवन्देवदेवेशभक्तानुग्रहकारक ॥ आश्चर्यकारिंक-
थितमाख्यानंपुरुषोत्तम ॥ १ ॥ मासेमलिम्लुचेस्नानव्रतस्यफलमीदृशं ॥
विशेषेणपुनर्ब्रूहिस्नानस्यफलमीश्वर ॥ २ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ शृ-
णुसुंदरिवक्ष्यामिमलिम्लुचकृतस्यच ॥ स्नानस्यफलमत्युग्रंपापपंजरभेदकं ॥
३ ॥ सर्वतीर्थेषुसुस्नातोधिमासेस्नातियोनरः ॥ वरदास्तस्यसर्वेस्युर्देवाना

स्त्यत्रसंशयः ॥ ४ ॥ यमलोकंनपश्यंतिस्नातामासिमलिम्लुचे ॥ सर्वकार्या
णिसिद्ध्यंतिपरिपूर्णमनोरथाः ॥ ५ ॥ यस्नात्यनुदितेसूर्येचाधिमासिजलेऽम
ले ॥ तस्यवैदशमासस्यफलंस्नानस्यजायते ॥ ६ ॥ यःकरोतिनरोभक्त्या
स्नानंकेशवतुष्टये ॥ मलिम्लुचेसतीर्थानांलभतेस्नानजंफलं ॥ ७ ॥ विष्णु
पादोदकस्नानंमलमासेऽर्थकामदं ॥ तस्मात्सर्वप्रयत्नेनतत्स्नानंभुविदुर्लभं ॥
८ ॥ यस्ययस्ययदास्नानंकुर्याद्देवस्यतुष्टये ॥ अधिकेसर्वदेवानांप्रीतयेतत्प्र
जायते ॥ ९ ॥ प्रयागेचाधिकेमासेस्नात्वादृष्ट्वाचमाधवं ॥ प्रयांतिसर्वपापा
निदग्ध्वाममसलोकतां ॥ १० ॥ अपिपापसहस्राणिकुर्वन्मर्त्योमलिम्लुचे
पूर्वपापविशुद्धात्मास्नानमात्रेणजायते ॥ ११ ॥ सरस्वत्यांकृतंस्नानंयदि-
मर्त्यैर्मलिम्लुचे ॥ तेषांजन्मसहस्राणांपापंयातिसहस्रधा ॥ १२ ॥ पितर-
स्तर्पितास्तेनपायसैर्मधुसर्पिषा ॥ येनस्नानंकृतंमासिमुक्त्यर्थमाधिकेमले ॥

१३ ॥ कुरुक्षेत्रादितीर्थेषुनित्यस्नानेनयत्फलं ॥ तत्फलंसमवाप्नोतिमन्मा
सस्नानयोगतः॥१४॥गवांकोटिप्रदानस्यग्रहणेचंद्रसूर्ययोः॥ अधिकेतदवा
प्नोतिस्नात्वाविमलवारिणि॥ १५ ॥ तथाविप्रसहस्राणांभोजनेनतुयत्फलं ॥
तदेवद्विगुणंस्नात्वामन्मासेलभतेनरः॥ ६ ॥ देवादेवत्वमापन्नामन्मासस्ना-
नपुण्यतः ॥ ऋषयोनिर्मलाजातास्तथादेवर्षयोऽपरे॥ १७ ॥ नकरोतिनरः
स्नानंमन्मासेमूढचेतनः॥ संसारनरकाद्घोरान्मुच्यतेनकदाचन ॥ १८ ॥
नस्नातिमलमासेवैयोनरोममतुष्टये ॥तस्यजन्मवृथालोकेभुवोभारायकेवलं
१९ ॥ दंभेनापिकृतंस्नानंमन्मासेमुक्तिदायकं ॥ संसर्गेणापिसवनंकृत्वाम-
र्त्योदिवंव्रजेत् ॥ २० ॥ भूधराःसरितोवृक्षानैवभारायभूतले ॥ परंभाराययो
श्नातिविनास्नानंमलिम्लुचे॥ २१ ॥सर्वतीर्थमयंस्नानंमन्मासेजायतेध्रुवं॥
ऐहिकामुष्मिकफलंभक्त्यामेकमलालये ॥ २२॥ महेश्वरादिदेवानांसदासं

म० तोषकारकं ॥ तस्मात्सर्वेषुकालेषुमन्मासेस्नानमाचरेत् ॥ २३ ॥ ऋतुंकृत्वा अ०
३५ मुनीनांयेप्रत्यासत्तिमखंडितां ॥ कामयंतेधिमासेतेकुत्रचित्स्नांतुसर्वदा ॥ १६
२४ ॥ विनावह्निंविनायज्ञमिष्टापूर्तंविनाप्रिये ॥ वांछंतिस्वर्गंतेस्नांतुप्रात--
स्तोयेमलिम्लुचे ॥ २५ ॥ गोभूमितिलवासांसिस्वर्णधेन्वन्नकानिच ॥ अद
त्वेच्छंतियेनाकंस्नांतुतेऽधिकमासके ॥ २६ ॥ त्रिरात्रैर्दुव्रतैःकृत्स्नैःपाराकै
श्चनिजांतनुं ॥ अशोष्येच्छंतियेस्वर्गंस्नांतुतेधिकमासके ॥२७ ॥ होमस्तु
चैत्रेवैशाखेतपःपूजाचकार्तिके ॥ तपोहोमंतथादानंमलमासेधिकंत्रयं ॥ २८
येलोकादानशीलानांयेलोकाविपिनौकसां ॥ लोकाअतिथिभक्तानांस्नायिनां
तेमलिम्लुचे ॥ २९ ॥ देवलोकान्निवर्ततेपुण्यैरन्यैर्मनोरथैः ॥ कदाचिन्ननि
वर्ततेमन्मासस्नायिनोनराः ॥ ३० ॥ नातःपरतरंकिंचित्पवित्रंपापनाशनं ३५
॥ नातःपरंव्रतंकिंचिन्नातःपरतरंमहत् ॥ ३१ ॥ एतदेवपरंपथ्यंसद्योदुरित

नाशनं ॥ मयातुभ्यंसमाख्यातंलोकानांहितकाम्यया ॥ ३२ ॥ अज्ञातपात
कंशुष्कंवाङ्मनःकर्मभिःकृतं ॥ मलिम्लुचेकृतंस्नानंहंत्यघंसमिधोनलः ॥
३३ ॥ कामादिकंचयत्पापंज्ञानाज्ञानकृतंचयत् ॥ स्नानमात्रेणनश्येतमा--
सिप्राप्तेममाधिके ॥ ३४ ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येस्ना
नप्रशंसानामषोडशोऽध्यायः ॥ छ ॥ छ ॥ ॥
॥ श्रीकृष्णउवाच ॥ ॥ अधिमासेचसंप्राप्तेद्वादशीवाथपौर्णिमा ॥ व्यती
पातदिनंवापिकिंचिद्दानंमहाफलं ॥ १ ॥ सर्वयज्ञेषुयत्पुण्यंसर्वतीर्थेषुयत्फ
लं ॥ तत्फलंसमवाप्नोतिविष्णुलोकेमहीयते ॥ २ ॥ तस्योक्तदिवसेदानंत-
थोक्तफलदंभवेत् ॥ आज्यपक्वंगुडैर्युक्तंत्रयस्त्रिंशदपूपकं ॥ ३ ॥ कांस्यपा-
त्रेविनिक्षिप्यशक्तितोदक्षिणान्वितं ॥ उपानद्वस्त्रसंयुक्तंविप्रायविनिवेदयेत्
॥ ४ ॥ कलाकाष्ठादिरूपेणयोनित्यंवर्ततेहरिः ॥ लोकेविप्रस्वरूपेणतस्मै

कालात्मनेनमः ॥ ५ ॥ यस्यहस्तेगदाचक्रेगरुडोयस्यवाहनं ॥ शंखःकरत
लेयस्यसमेविष्णुःप्रसीदतु ॥ ६ ॥ अधिमासेतुसंप्राप्तेघृतंवस्त्रमुपानहौ ॥
दानंगृहाणसर्वात्मन्व्रतसंपूर्तिहेतवे ॥ ७ ॥ साज्यंचसगुडंचैवत्रयत्रिंशद-
पूपकं ॥ प्राणिनांप्रीणनार्थायतस्मैकालात्मनेनमः ॥ कुरुक्षेत्रमिदंदेशःसा
क्षाद्विष्णुरयंद्विजः ॥ पृथ्वीसममिदंदानंगृहाणपुरुषोत्तम ॥ ९ ॥ मलानां-
चैवशुद्ध्यर्थंपापप्रशमनायच ॥ पुत्रपौत्रादिवृद्ध्यर्थंतवदास्यामिभास्कर १०
अधिमासेतुसंप्राप्तेप्रीत्यैदत्तंजनार्दन ॥ त्वामुद्दिश्यसुराध्यक्षप्रसीदपुरुषो-
त्तम ॥ ११ ॥ येनाक्रांतास्त्रयोलोकादानवाश्चवशीकृताः ॥ शरण्यःसर्वभू-
तानांसमेविष्णुःप्रसीदतुः ॥ १२ ॥ एवंसंपूज्यदेवेशंपुरुषोत्तममादृतः ॥ त
स्यपुण्यफलंवक्तुंनाहंशक्तोनशंकरः ॥ १३ ॥ मलिम्लुचेव्रतंयेमेमासमेकंचरं
तिवै ॥ वसंतितेममपुरेयावत्कल्पःसमाप्यते ॥ १४ ॥ अपूज्यंपूजयेद्देवंसर्व

काममफलंलभेत् ॥ गवार्चनंविप्रपूजांयः करोतिमलिम्लुचे ॥ १५ ॥ तुलसी
सेवनान्नृणामक्षय्यंस्वर्गमश्नुते ॥ सर्वान्कामानवाप्नोतिनात्रकार्याविचारणा
१६ ॥ गंधर्वाप्सरसोयक्षपन्नगाश्चविहंगमाः ॥ मलमासजपुण्येनपापान्मु-
क्तादिवंगताः ॥ १७ ॥ अत्रार्थेयत्पुरावृत्तंतच्छृणुष्वसुमध्यमे ॥ स्नानादप्स
रसाप्राप्तंफलंदुर्गतिनाशन ॥ १८ ॥ अप्सरारूपसंपन्नानाम्नास्मितविला-
सिनी ॥ धनदस्यप्रियानित्यमिंद्रलोकनिवासिनी ॥ १९ ॥ एकदाक्रीडनार्था
यसखीभिःपरिवारिता ॥ स्वर्गलोकादिहप्राप्ताकुरुक्षेत्रमुपागता ॥ २० ॥ क्री
डित्वासुचिरंकालंपुष्पजातीर्विचिन्वती ॥ विगुंफ्यकुसुमैर्मालांहस्तेधृत्वाय
थाब्रवीत् ॥ २१ ॥ ॥ अप्सराउवाच ॥ नमेसाखिसमोभर्तायस्यकंठेसम-
र्प्यच ॥ तेनाहंनिवसाम्यत्रततःसुखमवाप्नुयाम् ॥ २२ ॥ एवंवदतिसात
न्वीकामाक्रांतेनचेतसा ॥ तदातत्रसमायातोदुर्वासाऋषिकोपनः ॥ २३ ॥

ततःसर्वांगताःसख्यस्तंदृष्ट्वाभयविव्हलाः ॥ एकाकिनीस्थितामोहात्साच
स्मितविलासिनी ॥ २४ ॥ अविचार्यतयातस्यमालाकंठेसमर्पिता ॥ तदैव
क्रोधभावेनशप्तासाऋषिणाध्रुवं ॥ २५ ॥ पिशाचीवममांगेत्वंदुष्टेस्पृष्टासि
किल्बिषे ॥ तस्मान्मद्वचनाच्छापात्पिशाचीभवसत्वरं ॥ २६ ॥ ततःसारु-
दतीपादौगृहीत्वाकरुणाकरं ॥ उवाचदीनयावाचाकृतमेतत्क्षमस्वमे ॥ २७
अजानंत्याकृतमिदंकुरुष्वानुग्रहंमयि ॥ अपराधशतेनापिनस्त्रियंहंतिपंडि-
तः ॥ २८ ॥ दयांकुर्वंतिदीनेषुसाधवोदीनवत्सलाः ॥ इत्युक्तःसमुनिःप्रा-
हप्रपन्नार्तिहरोयतः ॥ २९ ॥ भविष्यसिपिशाचीत्वंयतोवाङ्नहिमेमृषा ॥
चतुर्युगसहस्रांतेपुनर्मद्वाक्ययोगतः ॥ ३० ॥ कुमारीनामसुक्षेत्रेमहिसाग
रसंगमे ॥ काचित्तपस्विनीतत्रयाज्ञवल्क्यक्रमोद्भवा ॥ ३१ ॥ आयास्यति ३७
तपःकर्तुंमलमासेसमागते ॥ तत्रस्थास्यतिसाबालातापसीगुणशालिनी ॥

३२ ॥ इत्थंतस्याःप्रकुर्वंत्यास्तपःपरमदुष्करं ॥ अधिमासागमिष्यंतिमहि
सागरसंगमे ॥ ३३ ॥ अष्टोत्तराधिकशतंस्नानदीपार्चनादिभिः ॥ उपवा-
सेननक्तेनमौनेनायाचितेनच ॥ ३४ ॥ कदाचिद्दैवयोगेनकालपाशनियं-
त्रिता॥ क्षुत्तृड्भ्यांपीडितातत्रहाहाभूतेह्यनाश्रये ॥ ३५॥ द्वादश्यामसितायां
चत्वंयास्यसिमलिम्लुचे ॥ दृष्ट्वातांमुक्तकामात्वंतस्याःपार्श्वेगमिष्यसि ॥ ३६
तस्याःसंदर्शनादेवज्ञानमुत्पत्स्यतेतव ॥ वदिष्यसिशुभांवाणींतापसींतां-
सुवर्चसं ॥ ३७ ॥ मातर्ममोपरिकृपांकुरुदुःखौघनशानं ॥ नित्यंमृत्युर्वरंजं
तोर्माभैशाच्यंक्षणंभवेत् ॥ ३८॥ श्रुत्वासातापसीदेवीत्वद्वाक्यंकरुणापरं॥
एकस्यैवाधिमासस्यफलंतवप्रदास्यति ॥३९॥ तेनत्वंमुक्तशापासिमलमास
फलेनवै ॥ गच्छयाहिसुखंभूमौमद्वाक्यात्पारमेष्यासि ॥ ४० ॥ कृष्णउवाच
॥ इत्थंसैवाप्सरोलोकेमलमासप्रभावतः ॥ दुर्वाससापुराशप्तापुनर्मुक्तासु-

म० वाक्यतः ॥ ४१ ॥ मलमासफलंदोविवक्तुंकेनापिशक्यते ॥ अपिवक्रसह- अ०
३८ स्रैस्तुशेषोनाहंक्षमोविधिः ॥ ४२ ॥ सत्यंसत्यंपुनर्वाक्यंनादत्तमुपतिष्ठति ॥ १७
तथासत्यंपुनर्जानेमलमासाधिकंनहि ॥ ४३ ॥ नत्वादृशीसमानारीनपु-
मान्सदृशोमम ॥ मलमाससमोमासोनास्तिब्रह्मांडगोलके ॥ ४४ ॥ पर्व
तेषुयथामेरुर्ग्रहाणांचयथारविः॥ सरित्सुचयथागंगागरुत्मांश्चपतत्रिषु ४५
नक्षत्राणांयथाचंद्रोगौर्वरिष्ठाचतुष्पदा ॥ मासानांमलमासोयंद्विपदांब्राह्म-
णोयथा ॥ मलमासेकृतंसर्वंस्नानदानादिकंचयत् ॥ अक्षय्यंतद्भवेत्सर्वमा-
ज्येनेवहुताशनः ४७ ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येअप्सरो
मोक्षनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ६९ ॥
श्रीकृष्णउवाच ॥ मलिम्लुचेकृतस्येहस्नानानांत्रितयस्यच ॥ यत्फलंलभते ३८
जंतुस्तद्वक्तुंकेनपार्यते ॥ १॥सुखदंश्रीपदंदीर्घजीवितव्यप्रदंतथा ॥ रोगघ्नं-

कीर्तिदंस्वर्गमोक्षदंक्रमतोयतः ॥ २ ॥ श्रीरुवाच ॥ भगवन्करुणाधीशक-
त्रिस्नानान्मलिम्लुचे ॥ अवापसद्गतिंतन्मेवक्तुमर्हसिकेशव ॥ ३ ॥ श्रीकृ-
ष्णउवाच ॥ शृणुदेविप्रवक्ष्यामिकथामाश्चर्यकारिणीं ॥ मलिम्लुचस्यमास
स्यकृतस्नानत्रयस्यच ॥ ४ ॥ पुरादक्षिणदेशेतुप्रशस्तेगौतमीतटे ॥ प्रति-
ष्ठानपुरेरम्येचातुर्वर्ण्यसमाकुले ॥५॥श्रुतिस्मृतिसदाचारयुक्तेपंडितमंडिते॥
तत्रकश्चिद्द्विजश्चासीद्वृद्धःसद्धर्मसंयुतः ॥६ ॥ नाम्नावैधर्मशर्मेतिसदाचार-
प्रियःसदा ॥ कुटुंबीबहुविद्याढ्यःसतांमान्योमहामतिः ॥ ७ ॥ स्वधर्मेचरत
स्तस्यकदाचित्कालपर्यये ॥ मलिम्लुचःसमायातोमासोमेऽतिप्रियःप्रिये ॥
॥ ८ ॥ महापुण्यप्रदःसर्वजंतूनांस्नानतोपिच ॥ द्विजेनतेनमनसिचिंतितंकिं
करोम्यहं ॥ ९ ॥ वृद्धभावान्मयाशक्यंस्नानंकर्तुंननित्यशः ॥ परंदिनत्रयं-
स्नास्येमलमासेऽघनाशने ॥ १० ॥ इतिबुद्ध्यासमाधायविधिनानेनभामिनि॥

म० ३९ प्रारब्धंस्नानमंतेहिमलमासदिनत्रये ॥ ११ ॥ एवंदिनद्वयंस्नानंगौतम्यांतेन
वैकृतं ॥ तृतीयेतुदिनेतेनप्रत्यूषेत्वरुणोदये ॥ १२ ॥ स्नानार्थंसर्वसंभारान् अ० १८
गृहीत्वागौतमींप्रति ॥ गमनंकृतमागत्यमार्गेकश्चित्क्षुधाकुलः ॥ १३ ॥ क्रू-
रःप्रेतस्तुमिलितःसर्वतोधमनीयुतः॥शुष्कांगःसर्वतोधुन्वन्हाहाकाररवाकु
लः ॥ १४ ॥ एधस्थूणप्रतीकाशोरक्ताक्षोऽतिकृशोदरः ॥ सलोमापिंगलःपृ
ष्ठेभीषणान्भीषयन्जनान् ॥ १५ ॥ तद्दृष्ट्वाविकृतंभूतंधर्मशर्माद्विजोत्तमः ॥
उवाचवचनंसूक्ष्मंकोऽसित्वंभीमदर्शनः ॥ १६ ॥ सब्राह्मणवचःश्रुत्वाद्दृष्टि
पातंगतोपिहि ॥ दृष्ट्वाकिंचिज्ज्ञानभावंविवेकःसमभुत्तदा ॥ १७ ॥ उवाचव
चनंश्लक्ष्णंबद्धांजलिपुटःस्थितः ॥ विनयावनतोभूत्वाविप्रंनत्वाह्युवाचसः॥
॥ १८ ॥ प्रेतउवाच ॥ भगवन्भूमिदेवेंद्रप्रेतोस्मिजनभीतिदः ॥ तवदृष्ट्वा-
वचःश्रुत्वाकिंचिन्मेज्ञानमागतं ॥ १९ ॥ विवेकोपिसमायातोदयांकुरुममो ३९

परि ॥ स्वामिन्नस्माकमशनंनिंद्यंलालायितंबहु ॥ २० ॥ स्थानंनित्यंश्मशा
नादिकार्यंवापिदुरात्मता ॥ लोकानांपीडनंछिद्रदर्शनेसतिभूसुर ॥ २१ ॥
संदर्शनंपुण्यदंचपापपुंजनिवारणं ॥ जातंतन्मेद्यभवतोलप्स्येसौख्यमनुत्त
मं ॥ २२ ॥ तस्यैवंब्रुवतोदेविप्रेतस्योपर्यजायत ॥ ब्राह्मणस्यकृपार्दीनद-
यालोर्दीनभावदा ॥ २३ ॥ धृत्वाहृदिकृपांविप्रःप्रोवाचामुंपुनःप्रभुः ॥ केन-
पापेनतेप्रेतप्रेतत्वंप्राप्तमीदृशं ॥ २४ ॥ वदचेद्यदिजानासिकरिष्येतत्प्र-
तिक्रियां ॥ इत्युक्तेवचनेप्रेतस्तंदृष्ट्वालब्धसंस्मृतिः ॥ २५ ॥ उवाचस्वमघं-
शंसन्विप्रस्याग्रेस्थितश्चसः ॥ शृणुस्वामिन्दयासिंधोपापंमेबहुवर्तते॥२६
मयाचौर्यंबहुकृतंधर्षिताःपरदारकः ॥ सुरातिसेविताविप्राघातिताश्चमया-
विभो ॥ २७ ॥ एवमादीनिबहुधापापानितुकृतानिवै ॥ सहस्रशोमयाभु
क्तायातनायमलोकजाः ॥ २८ ॥ परंपारस्तुनाद्यापिदृश्यतेतस्यवैनसः ॥अ

थवादृश्यतेपारोयतस्त्वद्दर्शनंगतः ॥ २९ ॥ इत्युक्तेवचनेतेनब्राह्मणःकरु-
णानिधिः ॥ करोमितेप्रतीकारंपापस्यचवचोऽब्रवीत् ॥ ३० ॥ इत्युक्त्वाज-
लमादायमलिम्लुचदिनत्रये ॥यत्कृतंसवनंतस्यपुण्यंतस्मैप्रदत्तवान् ॥ ३१
प्राप्तमात्रेपितत्पुण्येसप्रेतोदिव्यरूपधृक् ॥ नत्वास्तुत्वाद्विजंतंतुविमानवर
मास्थितः ॥ ३२ ॥ अप्सरोगणसंकीर्णसर्वभोगसमृद्धियुक् ॥ जगामदेवभुव
नंद्विजवर्यप्रसादतः ॥ ३३ ॥ एवंमहापुण्यफलःसर्वपापप्रणाशनः ॥ स्नाना-
दप्यधिकोमासःकिंपुनःश्रद्धयाकृतः ॥ ३४ ॥ इतिश्रीपद्मपुराणेमलमासमा-
हात्म्येप्रेतमोक्षोनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ छ ॥
श्रीरुवाच ॥ श्रीकृष्णहृदयानंददेवदेवदयानिधे ॥ मलमासस्यमाहात्म्यं-
कथितंबहुविस्तरं ॥ १ ॥ पुनःकथयतस्मिन्वैचीर्णेह्येकांतरेव्रते ॥ किंफलंजा
यतेकेनचीर्णंप्राप्ताचकादशा ॥ २ ॥ श्रीकृष्णउवाच ॥ शृणुधर्मप्रियेदेविम

लिम्लुचकृतेनयत् ॥ एकांतरोपवासेनफलंदैवतदुर्लभं ॥ ३ ॥ पुरामेरुगिरेर्दे
शेविंध्यपर्वतसंभवा ॥ वर्ततेनिम्नगादिव्यासिद्धचारणसेविता ॥ ४ ॥ शिव-
हस्तसमुद्भूतासाक्षाच्छिवइवापरा॥स्मरणादपिसर्वेषांपापपंकजभेदिनी ॥५
नर्मदानामविख्याताऋषिसंघनिषेविता ॥ तस्यास्तीरेपरंरम्येनानातरुवि
भूषिते ॥ ६ ॥ हंसकारंडवाकीर्णेनानाकमलमालिनि ॥ नगरंभृगुकच्छा-
ख्यंविश्रुतंसुरपूजितं ॥ ७ ॥ तद्वासयोगतोयोग्यंमयानित्यंसमाश्रितं ॥ हरे
णचभवान्याचदेवैरन्यैःसमाश्रितं ॥ ८ ॥ तत्रासीद्ब्राह्मणःकश्चिद्भृगुवंश
समुद्भवः ॥ ज्योतिर्वित्सत्यवादीचसदाचारपरायणः ॥ ९ ॥ नाम्नाकुशलश
र्मासौभार्यातस्यकुशावती ॥ तस्यपालयतोधर्मंजातापुत्रीयशस्विनी॥ १० ॥
नाम्नामेधावतीसाध्वीरूपिणीश्रीरिवापरा ॥ कस्मैचिद्द्विजमुख्यायदत्तासा
प्राप्तयौवना ॥ ११ ॥ केनचित्कालयोगेनदैवयोगेनसासती ॥ वैधव्यमगम

म० त्स्त्रीणांदुःखदंमरणादपि ॥ १२ ॥ तयाविचारितंपश्चादाचरामितथाव्रतं ॥ अ०
४१ नयेनजायतेदुःखंसंसारभ्रमणोद्भवं ॥ १३ ॥ इतिनिश्चित्यमनसिपिताप्टष्ट १९
स्तुकन्यया ॥ पित्रातस्यैतुकथितंव्रतंपुण्यतमंमहत् ॥ १४ ॥ मलिम्लुचाख्य
मासस्यसर्वपापहरस्यवै ॥ एकांतरोपवासाख्यंसर्वदुःखनिवारणं ॥ १५ ॥
संसारतारकंदिव्यंव्रतानामुत्तमंव्रतं ॥ तथातस्मिन्समायातेधिकेमासितपो
धिकं ॥ १६ ॥ प्रातःस्नात्वानर्मदायांप्रारब्धंव्रतमुत्तमं ॥ त्वयायुतंमांसंपूज्य
ब्राह्मणानधिपूज्यच ॥ १७ ॥ भूशायिन्यासुवचसाहविर्भोजनशीलया ॥ क
रुणापरयाजंतोर्नित्यंब्राह्मणसेवया ॥ १८ ॥ सुवर्णदानपरयोपानद्दानवदा-
न्यया ॥ उद्यापनविधिंसर्वंसदाकुर्वाणयाभृशं ॥ १९ ॥ तस्याएवंप्रकुर्वंत्या-
बहवोधिगताःसमाः ॥ मासामलिम्लुचाश्चैवसदाश्रद्धासमायुताः ॥ २० ॥ ४१
कस्यचित्त्वथकालस्यपर्ययेसाकृशासती ॥ जहौप्राणान्जलेष्वेवतदाशंकर

किंकरैः ॥ नीताशंभुपुरंदिव्यंदेव्याश्चात्यंतवल्लभा ॥ २१ ॥ तत्रभोगान्बहू-
न्भुक्त्वाकालेनगिरिजातनौ ॥ लीनालोकसुखार्थायपुनर्वाराणसीपुरि ॥२२॥
जातादेवीविशालाक्षीदर्शनात्स्मरणादपि ॥ वंदनात्पूजनाद्वापिसर्वकामप्र-
दायिनी ॥ २३ ॥ आरोग्यदायिनीचापिमोक्षदादेवतामयी ॥ एवंप्रभावंत्वम-
न्मासपुण्यकंपुण्यसेविते ॥ २४ ॥ नक्तव्रतस्याचरणात्फलमेतत्प्रकीर्तितं ॥
नक्तव्रतेनापितत्रतत्सखीसापिकोमला ॥ २५ ॥ गताकैलासमचलंमलमा-
सप्रभावतः ॥ सापिकाश्यांसमुद्भूतागौरीमंगलपूर्विका ॥ २६ ॥ लोकानांमं-
गलंदत्तेदत्तेमोक्षंसुमंगलं ॥ गौरीशंकरसंयोगाद्गौरीशंकररूपतः ॥ २७ ॥ ए
वंज्ञात्वानरैर्देविनारीभिर्वापिबालकैः ॥ वृद्धैश्चयुवभिःकार्यमलिनेस्नानमुत्त-
मं ॥ २८ ॥ मन्मासप्रभवंपुण्यंवक्तुंशक्यंनवेधसा ॥ चतुर्भिर्वदनैर्देविपंचभि
र्वाशिवेनच ॥ २९ ॥ नमयाशेषसंज्ञेनसहस्रैर्वदनैरपि ॥ किंबहूक्तेनदेवेशि-

मलमासोर्तिनाशनः॥ ३०॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येएकांत-
रोपवासव्रतफलनामैकोनविंशोऽध्यायः॥ १९॥ ॥ छ॥ ॥ छ॥
श्रीरुवाच॥ पुनःकथयमेकिंचिदाश्चर्यंमलमासिकं॥ श्रीमन्नमृतसंवादिव-
चनंतृप्तिरस्तिन॥ १॥ श्रीकृष्णउवाच॥ शृणुदेविमहाश्चर्यपुराजातंमरु-
स्थले॥ प्रभावान्मलमासस्यफलहेतोर्महात्मनः॥ २॥ शतानिसप्तप्रेतानां
मुक्तानिक्षणमात्रतः॥ तत्तेऽहंकथयिष्यामिमलिम्लुचफलंमहत्॥ ३॥ मरु
सिंधौतुनगरीवर्ततेबहुविस्तरा॥ नाम्नाशिवपुरीख्याताशिवस्यातिप्रिया-
सदा॥ ४॥ गोकर्णस्यगिरेःपार्श्वेप्रासादाट्टालभूषिता॥ बव्हाश्चर्यवती-
रम्यारम्यचत्वरशोभिता॥ ५॥ नानाब्राह्मणसंयुक्ताक्षत्रियैश्चविराजिता॥
वैश्यैःशूद्रैस्तथान्यैश्चसंयुक्तासत्यवादिभिः॥ ६॥ श्रौतस्मार्तसदाचारप्रा-
प्तकर्मकरैर्वरैः॥ श्रुतिघोषसमाकीर्णासर्वशास्त्रवरावृता॥ ७॥ तस्यामासी

त्सदाचारःशूद्रःकश्चिद्द्वरोगृही ॥ नाम्नापिविप्रदासोसौकर्मणापितथावि-
धः ॥ ८ तस्यपत्नीविप्रदासीसानाम्नाशुभलक्षणा ॥ साध्वीपतिपरापत्यु
राज्ञासन्निरतासदा ॥९॥ कस्यचित्त्वथकालस्यपर्ययेमलिनाभिधः ॥ मासः
समागतोदेविममप्रियतमोभृशं ॥ १० ॥ तदातेनतुशूद्रेणसभार्येणद्विजा-
ज्ञया ॥ स्नातुमारभमाणेननित्यंदानपरेणच ॥ ११ ॥ गोकर्णगिरिमूलेतुसा-
रणेश्वरसन्निधौ ॥ गोकर्णीवर्ततेगंगासर्वपापप्रणाशिनी ॥ १२ ॥ स्मृतोपि
तारयत्याशुसंसारंसर्वतःसताम् ॥ दुःखान्यघानिदैन्यंचसारणेशस्ततःस्मृ
तः ॥ १३ ॥ तस्यदेवस्यसान्निध्यंत्रिषुकुंडेषुसंस्थितं ॥ तत्रागतानांलोका-
नामनुग्रहकरीशिवा ॥ १४ ॥ प्रियार्थदेवदेवस्यशंकरस्यमहानदी ॥ तत्र-
स्थास्यंतियेतेषामाधिर्व्याधिर्विनश्यति ॥ १५ ॥ तस्यांनद्यांसुवंद्यायांस्नानं
कृतवतःसतः॥ विप्रदासस्यशूद्रस्यसभार्यस्यवरानने॥ १६॥शिवंपूजयतोनि

त्यंसमासः पूर्णतांगतः ॥ उद्यापनंयथाशास्त्रंकृतंतेनविजानता ॥ १७ ॥ सन्नि
धौश्रीमहेशस्यगोकर्णतटवासिनः ॥ विधायोद्यापनंसर्वान्द्विजान्सपरितो-
ष्यच ॥ १८ ॥ सपत्नीकान्सदाचारान्न्यायमार्गानुसारिणः ॥ क्षमाप्यैवं
विसृज्यैतान्यावदायातिमंदिरे ॥ १९ ॥ तावन्मार्गेमहारौद्रान्प्रेतान्देविददर्
र्शसः ॥ कालयोगेनपापस्यपारंप्राप्तान्शुभोदयान् ॥ २० ॥ साधुदर्शनसं
जातज्ञानलेशान्महाबलान् ॥ निवृत्तक्रूरभावांश्चपराहिंसापराङ्मुखान् ॥ २१
तेषुकेचित्करालास्याः शुचिमेषनिभाः परे ॥ इतरेमंदगमनाः परेमुरजमध्य
माः ॥ २२ ॥ अतिक्षीणोदराश्चान्येनानाकारेणभीषणाः ॥ हाहाचीत्कारपूत्का
राः सर्वेसाहसकारिणः ॥ २३ ॥ दुर्दर्शदग्धवृक्षाभान्गर्ताक्षान्पिंगमूर्धजान् ॥
तान्दृष्ट्वातस्यपत्नीचत्रस्तानेत्रेनिमिल्यच ॥ २४ ॥ लतागृहेप्रविष्टाचशिवं-
संस्मृतवत्यपि ॥ तस्थौस्वस्थः सशूद्रस्तुकेयूयमितिचाब्रवीत् ॥ २५ ॥ तं-

नत्वाप्रेतराजस्तुनाम्नावन्हिशिखांगजः॥ उवाचवचनंसाधुसाधुंशूद्रवरोत्त
मं॥ २३॥ अस्माकंभाग्ययोगेनविधिनात्वंप्रदर्शितः॥ तवदर्शनमात्रेणसर्वे
षांनोह्यघंगतं ॥ २७॥ किंचिज्ज्ञानंसमायातमतस्त्वांप्रार्थयामहे॥निंद्या-
हारावयंसर्वेनिंद्यकर्मकराःसदा॥ २५॥ अनेकविधपापानांकर्तारोसुखसंयु
ताः॥ शतसप्तकसंख्याकाभ्रमंतोमरुमंडले॥ २९॥ तृषाक्षुधातुराःसर्वेक
र्मपाशैःसुयंत्रिताः॥ वर्तामहेमहाभागकुरुष्वास्मासुवेदयां ॥ ३०॥ मोच
यास्मान्महापापात्साधवोदीनवत्सला॥ इत्युक्तेवचनेसाध्वितेनप्रेतेनसादरं
॥ ३१॥ मलिम्लुचकृतस्नानसप्तकस्यफलंददौ॥ सर्वेभ्योमुक्तयेदत्तेतस्मि
न्तत्क्षणमेवच॥ ३२॥ प्रेतभावंपरित्यज्यदिव्यभावमुपागताः॥ विमाना
न्यास्थितासर्वेस्वर्गंजग्मुरनुत्तमं॥ ३३॥ तंशूद्रंसंस्तुवंतश्चनमंतश्चपुनःपु-
नः॥ इत्थंमलिम्लुचकृतस्नानपुण्यमहोदयः॥३४॥ तस्माद्यत्नेनकर्तव्यंस्ना

म० नंमासिमालिम्लुचे ॥ वर्तंतेऽन्यान्यपिशुभेमहाश्चर्याणिसुंदरि ॥ ३५ ॥ इति अ०
४४ श्रीपद्मपुराणेमलमासमाहात्म्येप्रेतमोक्षोनामविंशोध्यायः ॥ २० ॥ २०
श्रीकृष्णउवाच ॥ ॥ भूयएवप्रवक्ष्यामिशृणुसर्वांगसुंदरि ॥ मलिम्लुचकृ
तस्नानफलमद्भुतकारणं ॥ १ ॥ सौराष्ट्रेसुजनेदेशेवृक्षच्छायाविवर्जिते ॥ तृण
धान्याशनोपेतेगवाविकसमाकुले ॥ २ ॥ षट्काभीरगणोपेतेनगरग्रामशोभि
ते ॥ खेटखर्वटसंयुक्तेश्वखरौघसमान्विते ॥ ३ ॥ तत्रास्तिनगरंदिव्यंप्रभास
मितिनामतः ॥ पुण्यंपुण्यजनाकीर्णप्रासादापणपूरितं ॥ ४ ॥ बहुचत्वरसंशो
भिराजमार्गविराजितं ॥ रथ्योपरथ्यासंवीतंदुर्गदुर्गदृढारणं ॥ तत्रासीत्ब्रा
ह्मणःकश्चित्सोमशर्मागुणान्वितः ॥ वेदशास्त्रकृताभ्यासःसदाचारपरायणः
॥ ६ ॥ तेनेष्टंबहुभिर्यज्ञैर्दत्तंदानमनेकधा ॥ पूर्तंचापिकृतंनानातथासंराधितं ४४
बहु ॥ ७ ॥ स्नाताश्चबहवोमाघाअधिकाबहवःकृताः ॥ कदाचित्तस्यविप्रस्य

स्नानंगतवतःशुभे ॥८॥ सरस्वत्यास्तुसंयोगेसमुद्रस्यचशोभने ॥ मार्गेकश्चि
द्घोररूपोराक्षसोदर्शनंययौ ॥ ९ ॥ महाकायोमहावीर्यःपिंगोर्ध्वजटमूर्धजः ॥
करालास्योरक्तनेत्रोलंबग्रीवोमहाहनुः ॥ १० ॥ गर्ताधरोऽधमनिकोवक्रभ्रु-
कुटिभीषणः ॥ लंबोदरोमहाशौर्यःसदकूर्चोदिगंबरः ॥ ११ ॥ व्यात्ताननोल
लज्जिह्वोमहारावकरोविभीः ॥ पुरुषादोजीवघातीक्षुधापीडितविग्रहः ॥ १२
तंदृष्ट्वाब्राह्मणःकंचित्श्रीनृसिंहंस्मरन्स्थितः ॥ राक्षसोविस्मयाविष्टोग्रहीतुं
तंतुनाशकत् ॥ १३ ॥ जाज्वल्यमानंतपसादृष्ट्वाग्निमिवदारुणं ॥ उवाचवचनं
चापिविवेकगतदुर्मतिः ॥ १४ ॥ साधूदितसमायोगाद्योगादिवसनातनात् ॥
विप्रेंद्रस्त्वमधुष्योसितेजसाग्निरिवज्वलन् ॥ १५ ॥ बहुपापवतोमेद्यभवान्सा-
धुःसमागतः ॥ असाधुराक्षसत्वेपिभवद्दर्शनसंगमः ॥ १६ ॥ मांमोचयदया
सिंधोदीनबंधोऽद्यदुर्गतेः ॥ इतिवाक्यंसमाकर्ण्यराक्षसस्यचसद्द्विजः ॥ १७

म० तर्कयामाससमनसिधर्मतत्वंदयानिधिः ॥ यद्यहंभर्त्सयिष्यामिगमिष्यत्ययम अ०
४५ न्यतः ॥ १८ ॥ परामन्यांबहुविधांहिंसांदुष्टःकरिष्यति ॥ यद्येनंमोचयिष्या २१
मितन्मेधर्मोमहानयं ॥ १९ ॥ भविष्यतिदयारूपोबहूपकृतिकारकः ॥ विचा
र्येत्थंजलंकृत्वाकर्णिकायाःकरेभुवि ॥ २० ॥ मलिम्लुचेकृतस्नानादेकवारंद्वि
जोददौ ॥ तस्मैपापिष्ठरूपायसुपुण्यंपुण्यभोगवान् ॥ २१ ॥ तत्पुण्येनतुस
द्योसौदिव्यरूपधरोबभौ ॥ द्विजोपरिसुरैर्मुक्तापुष्पवृष्टिःपपातह ॥ २२ ॥सा
धुसाध्वितितंदेवास्तुष्टुवुर्द्विजपुंगवं ॥ महारक्षःप्रमोक्षेणजंतूनामुपकारकः ॥
२३ ॥ ततस्तंसुरसंवासेदेवयानेचशोभने ॥ किंकिणीगणसंकीर्णेदिव्यनारी
परिष्कृते ॥ २४ ॥ नानाभोगविभोगाढ्येरम्यपक्षिरवावृते ॥ निवेशयित्वा-
निर्जग्मुःस्वर्गेपुण्यनिवेशितं ॥ २५ ॥ संगीयमानंगंधर्वैरप्सरोभिःपृथक्पृथ- ४९
क् ॥ रणद्वलयहस्ताभिर्वीज्यमानंसुचामरैः ॥ २६ ॥ नत्वास्तुत्वातुतंविप्रं-

जगामत्रिदशालयं ॥ एवंदेविफलंस्नानेऽधिकेमासेभवेत्प्रिये ॥ २७ ॥ तस्मा
न्मानुष्यमासाद्यनस्नानमधिकेचरेत् ॥ तस्यामृतंकरान्नष्टंप्रमादात्प्रगतंप्रि
ये ॥ २८ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येराक्षसमोक्षोनामैकविंशति
तमोध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
श्रीरुवाच ॥ ॥ भगवन्भजनासक्तंमानसंममसांप्रतं ॥ मलिम्लुचेमहामा
सेनितरांतववल्लभे ॥ १ ॥ वदब्राह्मणसेवायाःफलंकिंस्याद्दयानिधे ॥ त-
त्सेवयाकस्यपुनःसंजातंसम्यगीहितं ॥ २ ॥ श्रीकृष्णउवाच ॥ ॥ शृणुसुं
दरिवक्ष्यामिद्विजसेवामहोदयं ॥ इतिहासंमहापुण्यंदुःखदारिद्र्यनाशनं ॥
३ ॥ अस्तिदेशोविराटाख्योमहाधनजनावृतः ॥ पुण्यवज्जनपुण्यात्मापुण्य-
तीर्थशतावृतः ॥ ४ ॥ नदुर्भिक्षंकदाप्यस्मिन्कस्याचित्पुण्ययोगतः ॥ राजव
र्यस्यदेवस्यवरदानप्रभावतः ॥५॥तस्मिन्देशेमहाद्रेस्तुसह्याख्यस्यसमीप

तः ॥ महापुराख्यंनगरंवर्ततेदेवदुर्लभं ॥ ६ ॥ यत्रधर्मश्चतुष्पादःकलाव
पिभविष्यति ॥ यत्रवर्णास्तुचत्वारःस्वधर्मपरिचारिणः ॥ ७ ॥ यत्रदेवीरे
णुकाख्यारामस्यजननीशुभा ॥ सर्वकामप्रदासाध्वीब्रह्माद्याखिलवंदिता
८ ॥ यत्रदेवाश्चऋषयोयत्रसाक्षान्महेश्वरः ॥ यत्रश्रीगौतमीगंगावृद्धापो-
ष्यानदींगता ॥ ९ ॥ प्रणीतासामहापुण्याब्रह्मणोयज्ञपात्रजा ॥ तत्रासी-
त्पादजोवर्णोमहाशूद्रइतीरितः ॥ १० ॥ नाम्नातुधनदासाख्यःस्वधर्मपरि
पालकः ॥ सर्वभावेनविप्राणांसेवांसकुरुतेसदा ॥ ११ ॥ दासेषुविद्यमा-
नेषुस्वस्यगर्वंविहायच ॥ पादप्रक्षालनंचक्रेद्विजांगणविभेदनं ॥ १२ ॥ मा
र्जयित्वापिसंस्कारंचित्रस्वस्तिकभूषणं ॥ वस्त्रप्रक्षालनंकर्मविक्रयंक्रयमेव-
च ॥ १३ ॥ पादसंवाहनंचैवस्नानंचाभ्यंगपूर्वकं ॥ विप्रस्त्रीणांचयत्सेवांस्व
स्त्रीद्वाराचकारह ॥ १४ ॥ धनेनापिस्वकीयेनविप्रकार्याणिसर्वदा ॥ चका-

रकपटंत्यक्त्वापूर्वपुण्यप्रभावतः ॥ १५॥ मलमासेविशेषेणस्नानदानदयाप
रः ॥सजातोदैवयोगेनकुष्ठीकुत्सितदेहवान् ॥ १६ ॥ तस्यपत्नीचखंजाक्षी
नाम्नामानवतीशुभा ॥ धनदासस्यशुद्रस्यचिंतामानसिजायते ॥ १७॥ए
वंचिंतयतस्तस्यकदाचित्कालपर्यये ॥ सिद्धेनागत्यकथितंश्वस्तेमृत्युर्भवि-
ष्यति ॥ १८ ॥ सदारस्यद्विजानांतुप्रसादात्त्वंस्वभार्यया ॥ स्वर्गंगमिष्य-
सिक्षिप्रंविमानवरमास्थितः ॥ १९ ॥ इतिश्रुत्वावचस्तस्यधनंतेनत्रिधाकृ-
तं ॥ दत्तःपुत्रायएकोंशःपुत्रीभ्यामपरोर्पितः ॥ २० ॥ तृतीयोद्विजसात्कृ-
त्वातीर्थेगत्वाऽर्पितस्तथा ॥ धनकोटिंविभज्यैवंकृतकृत्यस्ततोभवत् ॥ २१
एवंद्विजानांशुश्रुषाइहलोकेपरत्रच ॥ सर्वकामप्रदामोक्षसाधिकाशुद्रजेष्व-
पि ॥ २२ ॥ एवंकुर्वंतिसद्भक्तिंमलमासेतुयेनराः ॥ नारीवामुच्यतेपापान्न
गर्भंप्रविशंतिते ॥ २३ ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येद्विजसे-

वावर्णनंनामद्वाविंशतितमोऽध्यायः ॥ २२ ॥ छ ॥ छ ॥
॥ श्रीरुवाच ॥ दामोदरदयासिंधोवरदानफलाफलं ॥ मलिम्लुचेविशेषेण
कैःकैःकिंकिंफलंव्रतं ॥ १ ॥ श्रीकृष्णउवाच ॥ शृणुसुंदरिवक्ष्यामिलोका
नुग्रहहेतवे ॥ प्रविधानंतुदानानांफलानिममामासके ॥ २॥ योवैमलिम्लु
चेमासिहिरण्यंशक्तिमात्रकं ॥ ददातिद्विजमुख्यायसप्राप्नोतिसमीहितं ॥
३ ॥ सुवर्णंहिसुवर्णायसुवर्णमिवमंदिरे ॥ सुवर्णायचयोदद्यान्नचशोच्यःक
दाचन ॥ सुवर्णंसुद्विजेदत्तेवन्हिस्तुष्यतिदैवतैः ॥ तस्मिंस्तुष्टेभवेद्देवविदा-
रिद्यंनैवजन्मनि ॥ ५ ॥ गोदानेनभवेल्लोकोगवांलोमाभिसंख्यया ॥ क--
ल्पांतंब्रह्मणोलोकोभवेत्पापप्रणाशनः ॥ ६ ॥ नित्यंदानंसदादेयंहिरण्या-
दिमलिम्लुचे ॥ तेनदानप्रभावेनब्रह्मलोकमवाप्नुयात् ॥ ७ ॥ रजतंश्रद्ध ४७
योपेतोद्विजेयोवितरत्यणु ॥ पितरस्तस्यसंतुष्टाभवंतिनिखिलेष्टदाः ॥ ८ ॥

ताम्रंवाताम्रपात्रंवायोददातिमलिम्लुचे ॥ श्रीरुद्रःसर्वदस्तस्यरुद्राणीस-
हितोभवेत् ॥ ९ ॥ पद्मरागादिरत्नानांदानाद्भवतिभूपतिः ॥ मुक्तादानंवि
शेषेणभुक्तिमुक्तिप्रदायकं ॥ १० ॥ वस्त्रदश्चंद्रसालोक्यमाविकंपापनाश-
नं ॥ और्णिकंचमहामूल्यंवस्त्रंदत्तंभयापहं ॥ ११॥ यथाकालोपयोगायवस्त्रा
द्यमुपकारकं ॥ तद्दानंविविधान्लोकान्ददात्येवनसंशयः ॥ १२ ॥ धान्य-
दानंमहादानंसदादेयंद्विजातये ॥ प्रीतयेवासुदेवस्यममसर्वार्थसाधनं १३
अन्नमन्नार्थिनेदेयंजलंजलजलोचने ॥ जलार्थिनेसदादेयंतत्पुण्यमक्षयंभवे-
त् ॥ १४ ॥ उपानहौतुयैर्दत्तेद्विजेश्रद्धापुरःसरं ॥ तेषांनयातनायामीमार्गो
यातिसुखावहः १५ ॥ घृतंवाघृतपात्रंवासूर्यलोकफलप्रदं ॥ तिलपात्रप्र-
दानेनरुद्रलोकेमहीयते ॥ १६ ॥ योवार्षिकंशुभंधान्यंघृतादिरससंयुतं ॥
वस्त्राभरणसंयुक्तंपूज्यमांसमहेश्वरं ॥ १७ ॥ सपत्नीकंद्विजंचैवपूजयित्वास

दक्षिणं ॥ ददातिमत्प्रियेमासिद्वादश्यांतुविशेषतः ॥ १८ ॥ कृतकृत्योभवे
न्मर्त्यौनात्रकार्याविचारणा ॥ येनकेनाप्युपायेनशक्तेनाशक्तकेनवा ॥ १९
घृतंतुश्रद्धयादेयंद्विजायहितमिच्छता ॥ घृतदानात्परंदानंपृथिव्यांनैववि-
द्यते २० ॥ सप्तधान्यंद्विजेदेयंसहदक्षिणयाशुभे ॥ तेनसप्तर्षीणांलोकेपूज्य
तेनात्रसंशयः ॥ २१ ॥ व्रीहयश्चयवाश्चैवगोधूमाश्चप्रियंगवः ॥ मुद्गामाषा
स्तिलाश्चैवसप्तधान्यंप्रकीर्तितं ॥ २२ ॥ तिलाकृष्णास्तिलाःश्वेतास्तिला-
गोमूत्रसन्निभाः ॥ तिलाममप्रियानित्यंसर्वदेवप्रियास्तिलाः ॥ २३ ॥ ति--
लदानंसदाकार्यंमन्मासेतुविशेषतः ॥ सहेमतिलदानंतुसर्वाभीष्टप्रदायकं ॥
२४ ॥ मोदकान्घनकर्पूरसिताकार्यविनिर्मितान् ॥ मधुराज्यविशिष्टांस्तु-
बालाप्तजनमोदकान् ॥ २५ ॥ योददात्यधिकेमासिस्नात्वामत्तुष्टयेनरः ॥
तस्मैतुष्टोभविष्यामिप्रियेनैवात्रसंशयः ॥ २६ ॥ नानावस्तुसमुद्भुतान्मोद-

कान्सुमनोहरान् ॥ मत्प्रीत्यर्थं तुमन्मासिमधुरान्घृतपाचितान् ॥ २७ ॥
द्विजातिभ्यः प्रदत्वातुममलोकेमहीयते ॥ नविघ्नस्तस्यकार्येषुकदाचिदपि-
जायते ॥ २८ ॥ किंबहूक्तेनदेवेशिसत्कर्मास्तिपरंनहि ॥ दानाद्भूर्लोकसंसा
ध्यात्तस्माद्दानंसमाचरेत् ॥ २९ ॥ दानेनदेवावशगाः किमुमानुष्यकोजनः ॥
दानेनकीर्तिर्भवतिलोकेचात्रपरत्रच ॥ ३० ॥ दानेनधनधान्याप्तिश्चतुर्वर्ग
समागमः ॥ दानेनपापनाशश्चरोगनाशश्चदानतः ३१ ॥ दानेनवांछिता-
वाप्तिर्दानात्पुत्रप्रपौत्रकाः ॥ तस्माद्दानंसदादेयंमलमासेविशेषतः ॥ ३२ ॥
॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येनानादानप्रशंसानामत्रयोविंशतित
मोऽध्यायः ॥ २३ ॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥ ॥ ॥
॥ श्रीकृष्णउवाच ॥ ॥ शृणुसुश्रोणिवक्ष्यामिफलंयन्मलमासजं ॥ सर्व
दासर्वदानोत्थंफलंप्राप्नोतिमानवः ॥ १ ॥ सर्वव्रताधिकोमासः सर्वदानाधि

म० कोमतः ॥ सर्वेषामेवमासानामयमेवाधिकोमतः ॥ २ ॥ स्नानंदानंजपोहोमः अ०
४९ स्वाध्यायोहरितोषणं ॥ स्नानेनाथव्रतेनाथदीपदानेनवापुनः ॥ ३ ॥ पुजने २४
नतुविप्रस्यतथागोपूजनेनच ॥ येनकेनाप्युपायेनमासेस्मिन्व्रतमुत्तमं ॥
व्याजेनापिकृतंयेननसपश्यतिभास्करिं ॥ ४ ॥ शुष्कार्द्रपातकंघोरंपाप-
संघातसमुद्भवं ॥ संप्राप्तेमलमासेतुतत्सर्वंयातिभस्मसात् ॥ ५ ॥ मलमा-
ससमुत्थेनवन्हिनापातकेंधनं ॥ भस्मसात्तद्भवेद्देविअपिजन्मशतोद्भवं ॥ ६
नेदृशंपावनंकिंचिन्नराणांभूतिमिच्छतां ॥ यादृशोमलमासोयंपुरुषोत्तमव-
ल्लभः ॥ ७ ॥ अश्वमेधसहस्राणिवाजपेयशतानिच ॥ अधिमासदिनैकस्य
कलांनार्हंतिषोडशीं ॥ ८ ॥ नगंगानगयादेवीनकांचीनचपुष्करं ॥ नचापि
कौरवंक्षेत्रंनरेवानमहीशिवा ॥ ९ ॥ यमुनाचंद्रभागाचनतुल्यामलमासके ४९
॥ अनायासेनदेवेशिप्राप्यतेवैष्णवंपदं ॥ १० ॥ असंक्रांतेसमयातेमासि

वैपुरुषोत्तमे ॥ येकुर्वंतिनराःस्नानंतेःप्राप्तंजन्मनःफलं ॥ ११ ॥ उपवासप-
रोभूयात्पूजयेत्पुरुषोत्तमं ॥ विमुच्यसर्वपापेभ्योवसेद्वैकुंठसन्निधौ ॥ १२ ॥
नदृष्टंत्रिषुलोकेषुव्रतमेतत्सुदुर्लभं ॥ अज्ञानज्ज्ञानतश्चीर्णंचतुर्वर्गफलप्रदं॥
१३ ॥ तावत्पापानिगर्जंतितावद्भूतानिभूतले ॥ तावद्यमयातनायामीयावद्दू
रोमलिम्लुचः ॥ १४ ॥ यथाबीजानिभूभागेवापितानिभवंतिच ॥ अमृता
ख्यायथावल्लीयथादूर्वादलंभुवि ॥ १५ ॥ वर्धतेतद्वदेवेदंकुरुतेसत्फलंमले॥
तस्मात्सर्वात्मनाशक्त्यामलमासव्रतंचरेत् ॥ १६ ॥ ॥ श्रीरुवाच ॥ म
लमासव्रतस्याथयथाशक्तिकृतस्यच ॥ यत्फलंजायतेदेवतदेवकथयस्वमे
१७ ॥ ॥ कृष्णउवाच ॥ ॥ अत्रार्थेकथयिष्यामिइतिहासंपुरातनं ॥ अरुं
धत्याश्चपार्वत्याःसंवादमतिसुंदरं ॥ १८ ॥ अरुंधत्युवाच ॥ ॥ सर्वेष्वपि
हिमासेषुव्रतानिकथितानिमे ॥ अधिमासेचसंप्राप्तेकिंकार्यंगौरितद्वद १९

॥ पार्वत्युवाच ॥ ॥ शृणुसाध्विपुरावृत्तमधिमासव्रतंप्रति ॥ समक्षंममदे-
वस्यमाताममयथाब्रवीत् ॥ २०॥ एकदामेनयामात्रास्नेहाद्वात्सल्यभावतः
ममोक्तंपुत्रिमत्तस्त्वमुत्पन्नाचसुलोचने ॥ २१ ॥ ख्यातात्रिजगतांमध्येत्व-
याख्यातंचराचरं ॥ ममचातिप्रियाकिंतुमयालभ्यंनतेंतिके ॥ २२ ॥ अहं
गृहांतरेख्यातात्वंतुविश्वांतरेउमे ॥ एकोपियत्रमेनामनवेत्तिकमलानने ॥
२३ ॥ यत्रतत्रस्थितावापित्वंब्रह्मादिभिरिड्यसे ॥ मासाःपक्षाश्चपर्वाणि--
दिनानितवसुंदरि ॥२४ ॥ व्रतैर्व्याप्तानिव्रतिभिरेवंत्वंपूज्यसेनरैः ॥ अप्ये
कपुष्पंमेमूर्ध्निनचाध्यारोपयेज्जनः॥ २५॥ पंचषष्ट्यधिकंवर्षेदिनानांचशतत्र-
यं ॥ मद्धियार्धघटीनास्तिभाग्यंयोग्यंजगत्त्रये ॥ २६ ॥ ॥ पार्वत्युवाच ॥
अरुंधतियदामात्राएवंस्नेहेनतर्जिता ॥ भर्तुःसमीपेवात्सल्याद्विनोदेनावभा
षणात् ॥ २७॥ स्मितंकृत्वामयातत्रमेनाप्रोक्तागुणार्थिनी ॥ उमोवाच ॥

मेनकेमातरेवंत्वंकस्माद्भृषेत्यमर्षणं ॥ २८ ॥ मलमासेपिमांकोपिनहिपूजय
तिकंचित् ॥ अन्याश्चापिक्रियाःसर्वानिवर्ततेसुधार्मिके ॥ २९ ॥ तस्मादत्रा
हंमेनेत्वांपूजयिष्यामिसुव्रते ॥ इत्युवाचाधिकेमासिव्रतंचाधिकृतंमया ३०
॥ अरुंधत्युवाच ॥ शिवप्रियेममत्वंवैव्रतंप्रब्रूहिपार्वति ॥ नासौनिरर्थकोमा-
सोममात्रनियमःकथं ॥ ३१ ॥ ॥ पार्वत्युवाच ॥ ॥ यदायदाधिमासःस्या
दसंक्रांतोमुनिप्रिये ॥ तदातदाव्रतंकार्यंतथ्यंतत्तेवदाम्यहं ॥ ३२ ॥ अयं-
मासोमयादत्तोमेनायाःख्यातिकारणात् ॥ मासस्यादौतृतीयायांसितायांशु
भ्रवस्त्रधृक् ॥ ३३ ॥ नारीवाथनरोवापिगृण्हीयान्नियमव्रतं ॥ गुरोरादेशमा
साद्यपूर्वाण्हेसंयतेंद्रियः ॥ ३४ ॥ ब्रह्मवृक्षासनेस्थाप्यपंचस्मरफलानिच ॥
मधूच्छिष्टेनकर्तव्यामेनातदुपरिस्थिता ॥ ३५ ॥ गजस्कंधसमारूढापातिपु-
त्रसमन्विता ॥ गौरीपंचकसंयुक्तासर्वाभरणभूषिता ॥ ३६ ॥ प्रतिष्ठाप्य

द्विजैस्तांचपूजयेन्ममामातरं ॥ विधिनावस्त्रपुष्पाद्यैर्धूपैरर्घ्यनिवेदनैः ॥ ३७
नीराजनैश्चदीपैश्चयथाप्राप्तैररुंधति ॥ एवंतुसकलंमासंपूजयेद्दीपकंदहेत् ॥
३८ ॥ एकभुक्तंचकर्तव्यंयावन्मासःसमाप्यते ॥ अथारंभेविसर्गेचअशक्त्या
वापिकारयेत् ॥ ३९ ॥ मासांतेमेनकाख्यांचहैमींकृत्वाप्रपूज्यच ॥ दद्याद्वि-
प्रायविधिवन्मातरंचार्चयेत्स्वयं ॥ ४० ॥ वस्त्रपल्लवतांबूलैःकुसुमैःफलपुष्प
कैः ॥ खर्जूरैःकंचुकैश्चापिपूजयेद्विप्रपंचकं ॥ ४१ ॥ भोजयेच्चसपत्नीकान्स्व
शक्त्यापरिधापयेत् ॥ एवंकृत्वाविधानेनव्रतंचैवमलिम्लुचे ॥ ४२ ॥ सुख
सौभाग्यसंतानंनारीप्राप्नोत्यरुंधति ॥ ममानंदकरंह्येतत्कर्तव्यंव्रतमुत्त-
मं ॥ ४३ ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येमेनाख्यव्रतकथनं
नामचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ छ ॥ छ ॥ ॥ ॥
॥ श्रीषणउवाच ॥ ॥ शृणुदेविप्रवक्ष्यामिमलमासव्रतंमहत् ॥ यच्छ्रुत्वा

मानवोभक्त्यामुच्यतेयोनिसंकटात् ॥ १ ॥ अत्रतेकथयिष्यामिकथांपापप्र-
णाशिनीं ॥ यांश्रुत्वाब्रह्महास्तेनोमुच्यतेयोनिसंकटात् ॥ २ ॥ वीरबाहुर्नृ-
पःपूर्वमासीद्भूमितलेखिले ॥ दातायज्वासुरूपश्चसुभगोजनवल्लभः ॥ ३ ॥
क्षमावांबलवांश्चैवसर्वैर्नृपगुणान्वितः ॥ तस्यभार्यासुरूपावैनाम्नाख्याताय
शोमती ॥ ४ ॥ धनयौवनगर्विष्ठासाभिमानवतीसती ॥ तस्यभूमिपतेरासी
न्मंडनःसचिवःसदा ॥ ५ ॥ स्वामिभक्तःश्रियायुक्तःसशूरःसचिवाग्रणीः ॥
तस्यभार्यागुणवतीसतीकुलशिरोमणिः ॥ ६ ॥ वीरबाहुःसुखंभुंक्तेयशोम -
त्यासमन्वितः ॥ सचिवेन्यस्यभूभारंसंसारफलमल्पधीः ॥ ७ ॥ साराज्ञपि-
चनोकिंचित्कुरुतेचतथाल्पकं ॥ नदानंनव्रतंवापिनदेवार्चनसेवनं ॥ तयोः
पुत्रद्वयंजातंकालेनबहुनाप्रिये ॥ ८ ॥ सुबाहुःशतबाहुश्चरूपयौवनसंयुतौ
॥ एकदामलमासेतुसंप्राप्तेमंडनप्रिया ॥ ९ ॥ जगामराजभवनंसेवायांचय-

शोमतीं ॥ साद्दष्ट्वाराजभवनंधनरत्नविभूषितं ॥ १० ॥ दासदासीजनाकी-
र्णसदास्वर्गपुरोपमं ॥ विमृश्यहृदिपुण्यस्यप्रोक्तंतस्याखिलंफलं ॥ ११ ॥
भुज्यतेसहस्रख्यावैकेवलंनार्ज्यतेपुनः ॥ इतिसंचिंत्यसुचिरंपरोपकृतिहेतवे
१२ ॥ यशोवतींगुणवतीप्राहसाहसिकंवचः ॥ ध्यात्वामनसिसद्भावंसखी--
रूपंविलोक्यच ॥ १३ ॥ ॥ गुणवत्युवाच ॥ ॥ यशोमतिश्शृणुष्वेदंवचनं
ममदानदे ॥ अधिमासव्रतंदेविकुरुष्वविधिपूर्वकं ॥ १४ ॥ तदवज्ञायवच--
नंयशोमत्यपिभामिनी ॥ उवाचसास्मितंवाक्यंश्शृणुमेवचनंसखि ॥ १५ ॥
यत्प्रजाभिः कृतंपुण्यंतीर्थयात्राव्रतादिकं ॥ राजातदंशभागीस्यात्तद्योगा-
दहमप्यथ ॥ १६ ॥ किंव्रतेनविशालाक्षिस्वशरीरविशोषणात् ॥ तपसाब्रह्म
चर्येणदत्तमेवोपभुज्यते ॥ १७ ॥ इत्युक्त्वागृहकार्याणिकारयामासभामिनी
॥ संतोष्यवचनैःसातुविससर्जयशोमतीं ॥ १८ ॥ व्रतंचक्रेगुणवतीविधिव-

न्मलमासके ॥ व्रतलोपेनदेवेशियशोमत्याःसुतोमृतौ ॥ परमज्वरपीडार्तौ-
सुयौवनधरौप्रिये ॥ १९ ॥ तद्दुःखदुःखिताराज्ञीविललापाकुलेक्षणा ॥ ललुं-
ठेभूतलेत्यंतशोकसंविग्नमानसा ॥ २० ॥ राजापिविललापार्तःसर्वलोकस-
मन्वितः ॥ प्रबोधितोबहुविधोमंडनाख्येनधीमता ॥ २१ ॥ अज्ञानावृतहृद-
योनबुबोधतथापिसः ॥ ॥ मलमासव्रतावज्ञाकृताज्ज्ञातंफलंतयोः ॥ २२ ॥
इतिश्रीपद्मपुरा० स्नानादिव्रतयोगेराजशोकोनामपंचविंशोऽध्यायः ॥ २५
॥ श्रीविष्णुरुवाच ॥ तदिदंसहसाजातंदुःखोद्वेगसमाकुलं ॥ मंडनस्यप्रि-
याश्रुत्वाशोकतप्तासमागता ॥ १ ॥ उभेरुरुदतुःसख्यौपुत्रशोकाकुलेक्षणौ
॥ वारयामासुरन्यायादास्यस्ताःसुविलोचनाः ॥ २ ॥ यशोमतीविलापांतेगु
णवत्यामुखंशुभं ॥ कुंकुमांजनसिंदूरस्रक्तांबूलविभूषितं ॥ ३ ॥ ददर्शोवा-
चकिमिदमकालेऽकारिमंडनं ॥ ॥ राज्ञ्युवाच ॥ ॥ धृतमाभरणंवस्त्रंसख्ये

वंतवनोचितं ॥ उत्तिष्ठोत्तिष्ठगच्छत्वंगृहंगुणवतिस्वकं ॥ अभाग्ययामयाऽ
त्यंतंदुःखमेवोपभुज्यते ॥ ५ ॥ साभृशंप्रेषिताकांतंप्रत्युवाचगृहंगता ॥ न-
जानेप्राणनाथाहंसख्यासंप्रेषितागृहं ॥ ६ ॥ महादुःखेपिपतितातद्विचार
यवैप्रभो ॥ मंडनःप्राहतांपत्नींनकिंचिदपिभामिनि ॥ ७ ॥ प्रातर्गच्छप्रि-
येभद्रेप्रतिबोधयतांसखीं ॥ अहंनरपतेःपार्श्वंगच्छामिजनसंसदि ॥ ८ ॥
॥ श्रीकृष्णउवाच ॥ ॥ इतिसंमंत्र्यतौदेविदंपतीप्रतिजग्मतु ॥ उभयोःस
न्निधौप्राप्तौपुत्रशोकापनुत्तये ॥ ९ ॥ राज्ञीतथाविधंदृष्ट्वागुणवत्यामुखंशुभं
॥ कोपाकुलाजगादेदंदासीवक्रेणभूपतिं ॥ १० ॥ राज्ञीप्रेमवशाद्राजातथा
गत्यनिरीक्ष्यच ॥तदिदंनिखिलंसम्यगितिमत्वाचुकोपसः ॥११॥ मंडनंबंध
यामासगुणवत्यासमंतदा ॥ सर्वंगृहगतंद्रव्यमानयामाससत्वरं॥१२॥कारा ५३
गृहगतौकृत्वादंपतीतौरुषान्वितः ॥ नृपतिर्दयितायुक्तःपुनःपुनरतर्जयत्॥

१३ ॥ मंडनःस्वांप्रियांप्राहप्रियेकिमिदमागतं ॥ नजानेकर्मणःकस्यविपा-
कोयमुपस्थितः ॥ १४ ॥ गुणवत्युवाच ॥ देवसेवकवर्गस्यस्वाम्ययत्तंच-
जीवितं ॥ कोपतःकोपनस्यास्यकाकथाक्रियतेवृथा ॥ १५ ॥ आवयोर्दुःख
मुदधिंवारयत्यतिकेवलं ॥ विष्णुर्विश्वंभराभारधारणैकधुरंधरः ॥ १६ ॥
श्रीधरःपरमेशानःसर्वदुःखनिकृंतनः ॥ संसारेसाररूपश्चसर्वाभीष्टफलप्रदः
१७॥ ॥ श्रीकृष्णउवाच ॥ ॥इत्युक्त्वापतिताभूमौलोहशृंखलयंत्रिता॥
मंडनोपिचनिःश्वासपरमोविरतश्चसः ॥१८॥ अत्रांतरेश्रीपतिनातज्ज्ञातंदुः
खबंधनं ॥ स्वप्नेसमेत्यकथितंराज्ञेराज्ञ्यैचसत्वरं ॥ १९ ॥ ॥ हरिरुवाच॥
॥ अहोनयुक्तंकृतवानसित्वंवीरबाहुक ॥ मुंचमुंचत्विमौराजन्दंपतीयौत्वया
धृतौ ॥ २० ॥ अधिमासव्रतफलंजातमक्षयमेतयोः ॥ प्राग्भवेपिनिर्धनयो-
र्मामुद्दिश्यकृतंचयत् ॥ २१ ॥ कुंकुमांजनसिंदूरस्रक्तांबूलदलादिकं ॥ प्र

क्षालितेपिवदनेनयातिविलयंस्वयं ॥ २२ ॥ ततोनदोषोनृपतेगुणवत्याः
प्रियस्यच ॥नकृतंतवपत्न्याचयद्व्रतंमेसुदुर्लभं ॥ २३ ॥ पुत्रशोकाकुलादीना
तेनजाताविशांपते ॥ तच्छ्रुत्वासहसोत्थायवीरबाहूर्नृपस्तदा ॥ २४ ॥ स्व-
प्नवृत्तंविचिंत्याशुपत्न्यैसर्वंन्यवेदयत् ॥ राजपत्न्यापिकथितंमयापिस्वप्न--
मीदृशं ॥ २५ ॥ लब्धंविलोकितंचैवसख्याप्रक्षालितंमुखं ॥ कारागृहंतदा
गत्यनृपतिःप्रिययासह ॥ २६ ॥ स्वयंप्रक्षालयामासगुणवत्यामुखांबुजं ॥
यावद्दर्शयतेपत्न्यैतावद्देवविभूषितां ॥ २७ ॥ पूर्ववद्ददृशेसापिलज्जितौतौ
स्वचेतसि ॥ ततःसमुदितंसर्वंराजामात्यजनादिकं ॥ २८ ॥ विमोच्यबंध-
नाद्राजावस्त्रादिभिरपूजयत् ॥ कृतांजलिपुटःस्थित्वाक्षमाप्यचपुनःपुनः २९
पुनरेवागतेकालेमलमासव्रतंशुभं ॥ सर्वेचक्रुर्यथाशास्त्रंलोकाश्चश्रीपतिप्रि-
यं ॥ ३० ॥ तद्व्रतस्यप्रभावेनजातास्तेसुखभागिनः ॥ तदाप्रभृतिविख्या

तंव्रतमेतदभूद्भुवि ॥ ३१ ॥ सुखदंसवर्लोकोनांदुःखदारिद्र्यनाशनं ॥ पुत्र
पौत्रर्द्धिदंलोकेधनधान्यविवर्धनं ॥ ३२ ॥ करोतियोमद्व्रतमेतदुत्तमंनरोथ
नारीभुविपापकंचुकं ॥ विहायभुक्त्वासततंयथेप्सितंसयातिवैकुंठपदंपरात्प
रं ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येस्नानादिफलयोगेबंधमोक्षो
नामषड्विंशतितमोऽध्यायः ॥ २६ ॥ छ ॥ छ ॥
॥ श्रीकृष्णउवाच ॥ ॥ मलमासव्रतंवक्ष्येशृणुदेविसमाहिता ॥ विधानंत
स्यवक्ष्यामिशृणुष्वगदतोमम ॥ १ ॥ सर्वपापहरंपुण्यंसर्वदुःखनिबर्हणं ॥
सर्वलोकेषुविख्यातंमन्मासव्रतमुत्तमं ॥ २ ॥ येनचीर्णेनपापानांशतकोटि
प्रशाम्याति ॥ असंक्रांतस्यमासस्यकुर्याद्भैनियतःशुचिः ॥ ३ ॥ स्नानंकुर्याद्यथा
चारंदंतधावनपूर्वकं ॥ शुक्लांबरधरःशुद्धोगृहमागत्यवाग्यतः ॥ ४ ॥ प्रक्षा
ल्यपादावाचम्यसंस्मरन्पुरुषोत्तमं ॥ अव्रणंकलशंस्थाप्यस्वर्णमूर्तिंप्रतिष्ठि

तं ॥ ५ ॥ देवार्चनादिकंकृत्वापश्चात्संकल्पपूर्वकं॥ लक्ष्मीनारायणंदेवमर्चये
द्भक्तिभावतः ॥ ६ ॥ आवाहनासनाद्यैश्चगंधपुष्पादिभिर्व्रती ॥ पुरुषोत्तमा
यनमःपूजयेद्भक्तिभावतः ॥७॥ गीतवाद्यैश्चनृत्यैश्चपुराणपठनादिभिः॥ स्तो
त्रैराराधयेद्देवंव्रतकृद्वाग्यतःशुचिः ॥ ८ ॥ मलमासेनिराहारःस्थित्वादेवत
वाज्ञया ॥ भोक्ष्येहंपुंडरीकाक्षपरेह्निशरणंमम ॥ ९ ॥ ॥ इतिनियममंत्रः ॥
॥ इतिविज्ञाप्यदेवेशमर्घ्यंदद्यादथेंदवे ॥ क्षीरोदार्णवसंभूतगृहणार्घ्यंमयेरि
तं ॥ १० ॥ कृतांजलिपुटोभूत्वाप्रार्थयेत्तदनंतरं ॥ तिष्ठन्पूर्वमुखोभूत्वापश्य
न्निंदुंचसत्तमं ॥ ११ ॥ नमःशुक्लांशवेतुभ्यंद्विजराजायतेनमः ॥ रोहिणीप
तयेतुभ्यंपुरुषोत्तमनमोस्तुते ॥ १२ ॥ ततश्चजागरंकृत्वापुराणश्रवणादि--
भिः ॥ जितेंद्रियोवशीशुद्धःपाखंडालापवर्जितः ॥ १३ ॥ ततःप्रातःप्रकुर्वी
ततद्विधानंवदामिते ॥ मंडलंकारयेद्दिव्यंचतुरस्रंसुमंगलं ॥ १४ ॥ शोभितं

वनमालाभिर्वितानध्वजराजितं ॥ बहुदीपसमाकीर्णकिंकिणीरवशोभितं ॥
१५ ॥ पर्णकैश्चामरैश्चैवकलशैश्चसमावृतं ॥ तन्मध्येसर्वतोभद्रंपंचवर्णवि
राजितं ॥ १६ ॥ कृत्वाजलान्वितंकुंभंन्यसेत्तस्योपरिद्विजः ॥ लक्ष्मीनाराय
णंदेवंपूर्णपात्रोपरिन्यसेत् ॥ १७ ॥ पंचामृतेनसंस्नाप्यगंधपुष्पादिभिःक्र
मात् ॥ भक्ष्यभोज्यादिनैवेद्यैःपूजयेत्संयतेंद्रियः ॥ १८ ॥ जागरंश्रद्धयाकृ
त्वाप्रातःपूर्ववदर्चयेत् ॥ आचार्यायप्रदातव्याप्रतिमादक्षिणान्विता ॥ १९
॥ प्रार्थनामंत्रः ॥ ॥ पुरुषोत्तमायहरयेयन्मयापूर्वसंचितं ॥ पूजितस्त्वंव
सिष्ठेनविश्वामित्रेणजन्हुना ॥ २० ॥ नाम्नावाविष्णुमंत्रेणयथासंख्यजपेन
च ॥ प्रीयतांमेरमाकांतदेहिमेवांछितंफलं ॥ २१ ॥ एवंद्वादशकुंभेषुसंपूज्य
गरुडध्वजं ॥ होमस्तत्रप्रकर्तव्यस्तोषणार्थंजगत्पते ॥ २२ ॥ सप्तप्रदक्षि
णंकृत्वापश्चाद्दानानिदापयेत् ॥ मलिम्लुचेविधेयानिदानानिविविधानिच ॥

२३ ॥ दंपतिपरिधानंचपदमष्टविधंतथा ॥ तिलपात्रंघृतपात्रंजलपात्रमु-
पानहौ ॥ २४ ॥ शय्यांसोपस्करां दद्याद्वित्तशाठ्यविवर्जितः ॥ भोजयेद्द्वि-
जदांपत्यंभूषयेद्वस्त्रभूषणैः ॥ २५ ॥ तांबूलंदक्षिणादद्यात्तेभ्योदानानिश-
क्तितः ॥ सुवर्णरजतंक्षौमंधान्यमाविकमौर्णिकं ॥ २६ ॥ पयःस्विनीसवत्सा
गौर्नानोपस्करसंयुता ॥ कंबलाजिनरत्नानिवासांसिविविधानिच ॥ २७ ॥
ब्राह्मणान्भोजयेत्पश्चाद्विभवाद्यनुसारतः ॥ इतिकृत्वाव्रतंसम्यक्सपुत्रःस
कलत्रतः ॥ २८ ॥ सर्वपापविनिर्मुक्तःकुलायुतसमन्वितः ॥ प्रयातिविष्णु
भुवनंयोगिनामपिदुर्लभं ॥ २९ ॥ ॥ इतिश्रीपद्मपुराणेमलमासमाहा
त्म्येव्रतयोगेस्नानविधानंनामसप्तविंशोऽध्यायः ॥ २७ ॥ छ ॥ छ ॥
॥ श्रीकृष्णवाच ॥ ॥ अथव्रतंप्रवक्ष्यामिमलमासिकसंज्ञितं ॥ सर्वपाप ५६
हरंपुण्यंपुरुषोत्तमहर्षदं ॥ १ ॥ ब्राह्मणक्षत्रियविशांस्त्रीशूद्राणांचसत्तमे ॥

सर्वदुःखोपशमनंसंसारोच्छेदकारणं ॥ २ ॥ अथवातुलसीसेवाशून्यलिं-
गप्रपूजनं ॥ गंगास्नानमवाप्नोतिसर्वतीर्थफलंभवेत् ॥ ३ ॥ अश्वमेधस-
हस्राणिवाजपेयशतानिच ॥तावद्युगसहस्राणिविष्णुनासहमोदते ॥ ४ ॥ स
र्वपापहरंकर्ममलमासव्रतंचरेत् ॥ पूर्ववत्पूजनंकृत्वास्तोत्रमेतदुदीरयेत् ॥ ५
नमःपुरुषोत्तमाख्यनमस्तेविश्वभावन ॥ नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज
६ ॥ येनेदमखिलंजातंयत्रसर्वंप्रतिष्ठितं ॥ लयमेष्यतियत्रैतत्तंप्रपन्नोस्मि-
केशवं ॥ ७ ॥ परेशःपरमानंदःपरात्परतरःप्रभुः ॥ चिद्रूपश्चित्परिज्ञेयःसमे-
कृष्णःप्रसीदतु॥८॥कृष्णंकमलपात्राक्षंरामंरघुकुलोद्भवं ॥ नृसिंहंवामनंवि-
ष्णुंस्मरन्यातिपरांगतिं ॥ ९ ॥ वासुदेववराहंचकंसकेशिनिषूदनं ॥ पुरा
णपुरुषोयज्ञपुरुषंप्रणतोस्म्यहं १० अनादिनिधनंदेवंशंखचक्रगदाधरं ॥ त्रि
विक्रमंहलधरंप्रणतोऽस्मिसनातनं ॥ ११ ॥ यइदंकीर्तयेन्नित्यंस्तोत्राणा

मुक्तमोत्तमं ॥ सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ १२ ॥ इतिस्तु-
त्वाततोविष्णुंब्राह्मणांश्चप्रपूजयेत् ॥ आचार्यंपूजयेत्पश्चाद्दक्षिणाच्छादना-
दिभिः ॥ १३ ॥ शृणुदेविप्रवक्ष्यामिमहालक्ष्मिकथानकं ॥ सर्वपापप्रश-
मनंसर्वदुःखनिबर्हणं॥ १४ ॥आसीत्पुराकृतयुगेसुमतिर्नामभूपतिः ॥ सोम
वंशोद्भवःश्रीमान्सप्तद्वीपैकराट्स्वयं ॥ १५ ॥ धर्मात्मासर्वसंपन्नःसर्व
संपद्विभूषितः ॥ सदाहरिकथासेवीहरिपूजापरायणः ॥ १६ ॥ हरि--
भक्तिपरोनित्यंशुश्रुषुरनहंकृतिः ॥ पूज्येषुपूजानिरतःसर्वभूतहितोगुणी ॥
१७ ॥ तस्यभार्यामहाभागासर्वलक्षणसंयुता ॥ पतिव्रतासुष्टुमतीतावुभौ-
चरतोव्रतं॥१८॥अधिमासाभिधंनित्यमुभौजातिस्मरौपरौ॥अन्नदानरतौनि
त्यंजलदानपरायणौ ॥ १९ ॥ तडागारामप्रासादानसंख्यातान्वितेनतुः
॥ आययौबहुभिःशिष्यैर्द्रष्टुकामोंगिरःसुतः ॥ २० ॥ मुनिमांगिरसंदृष्ट्वास-

मायांतंजनेश्वरः ॥ प्रत्युद्ययौसपत्नीकःपूजाभिर्बहुविस्तरं ॥ २१ ॥ कृता
तिथिक्रियंशांतंकृतासनपरिग्रहं ॥ नीचासनगतोभूपःप्रांजलिर्मुनिमब्रवी-
त् ॥ २२ ॥ ॥ राजोवाच ॥ ॥ भगवन्कृतकृत्योस्मिभवदागमनेनच ॥
सतामागमनंसंतःप्रशंसंतिसुखावहं ॥ २३ ॥ यत्रस्यान्महतांप्रेमतत्रस्युः
सर्वसंपदः ॥ यशःकीर्तिर्धनंपुत्राइतिप्राहुर्विपश्चितः ॥ २४ ॥ यत्रव्दृष्टिंग
मिष्यंतिश्रेयांस्यनुदिनंमुने ॥ तत्रसंतःप्रकुर्वंतिमहतींकरुणांप्रभो ॥ २५॥
योमूर्ध्निधारयेद्ब्रह्मन्महत्पादतलोदकं ॥ सस्नातःसर्वतीर्थेषुपुण्यात्मानात्रसं-
शयः ॥ २६ ॥ ममपुत्राश्चदाराश्चसंपत्त्वयिसमर्पिता ॥ ममकायश्चशांता-
त्मन्ब्रह्मन्किंकरवाणिते ॥ २७ ॥ विनयावनतंभूपंनिरीक्ष्यसमुनीश्वरः ॥
स्पृशन्करेणराजानंप्रत्युवाचातिहर्षितः ॥ २८ ॥ राजन्यदुक्तंभवतातत्स
र्वंत्वत्कुलोचितं ॥ विनयावनताःसर्वेचक्रुःश्रेयोलभंतिते ॥ २९ ॥ धर्मंचार्थं

चकामंचमोक्षंचनृपसत्तम ॥ विनयाल्लभ्यतेसर्वंविनयात्किंनलभ्यते ॥ ३० ॥
प्रीतोस्मितवभूपालसन्मार्गपरिवार्तिनः ॥ स्वस्तितेस्तुमहाभागयत्पृच्छा-
मितदुच्यतां ॥ ३१ ॥ त्वामद्याचारनिरतंसर्वसंपत्समावृतं ॥ नित्यंव्रतप-
रांभार्यांदृष्ट्वातेप्रीतिमानहं ॥ ३२ ॥ अर्हणाबहुधाःसंतिहरिसंतुष्टिकारि--
काः ॥ कथमेताद्धितेलब्धंयथावद्वक्तुमर्हसि ॥ ३३ ॥ ॥ इतिश्रीपद्मपु
राणेमलमासमाहात्म्येउद्यापनकथनंनामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥
राजोवाच ॥ ॥ शृणुष्वभगवन्सर्वंयत्पृच्छसिवदामितत् ॥ आश्चर्यभूतंसु
महदावयोश्चरितंविभो ॥ १ ॥ अहमासंपुरावैश्योनाम्नावीरइतिश्रुतः ॥ म
हापातकसंसर्गीविप्रद्रव्यापहारकः ॥ २ ॥ कुमार्गनिरतोनित्यंसर्वलोकाहिते
रतः ॥ पिशुनोदेवविद्वेषीदेवद्रव्यापहारकः ॥ ३ ॥ गोघ्नश्चब्रह्महाचोरःसर्व
प्राणिवधेरतः ॥ नित्यंनिष्ठुरवक्ताचपापीवेश्यापरायणः ॥ ४ ॥ स्थितेएवंम

दाढ्येचकश्चित्कालोमहान्गतः ॥ सर्वैर्बंधुजनैर्मुक्तोदुःखाद्दैन्यमुपागतः ॥५॥
मृगमांसाशनोनित्यंतथामार्गनिरोधकः ॥ एकाकीदुःखबहुलोनिवसन्निर्जने
वने ॥ ६ ॥ एकदाक्षुत्परिश्रांतोदुःखितोतिपिपासितः ॥ जीर्णदेवालयंपश्य
न्श्रीविष्णोर्विजनेवने ॥ ७ ॥ हंसकारंडवाकीर्णंतत्समीपेमहत्सरः ॥ पर्यंत
वनपुष्पौघसहितंतन्मुनीश्वर ॥ ८ ॥ अपिबंतत्रपानीयंतत्तीरविगतःश्रमः ॥
अथेयमागतासाध्वीममपत्नीसतीप्रिया ॥ ९ ॥ नाम्नाकुलीनाविख्यातासुष्टु
मत्यथदुःखिता ॥ बंधुवर्गपरित्यक्तादुःखिताजीर्णविग्रहा ॥ १० ॥ ब्रह्मन्
क्षुत्तृट्परिश्रांताशोचंतीममतक्रियां ॥ दैवयोगात्समायाताभ्रमंतीविजनेव-
ने ॥ ११ ॥ इमांदुःखवतींदृष्ट्वाजातामेविपुलाघृणा ॥ मयादत्तंजलंचास्यैम
हद्वनफलंतथा ॥ १२ ॥ गतश्रमाचसाब्रह्मन्मयादृष्टायथातथं ॥ मामुवाचव
नेचेयंममदुःखेनदुःखिता ॥ १३ ॥ ॥ सुष्टुमत्युवाच ॥ स्वामिन्किमर्थम

द्यापिपापंकर्तुमिहोद्यतः ॥ज्ञानेनाज्ञानतोवापिपापंकुर्वंतियेनराः ॥ १४ ॥स्व
कर्मक्षयपर्यंतंमहापातकिनोऽपिच ॥ तिष्ठंतिनरकेघोरेयावदाचंद्रतारकं ॥
१५॥ पूर्वसंचितपापानांनदृष्टानिष्कृतिर्हिनः ॥ किमर्थंपापकर्माणिकुर्वंतिहि
पुनःपुनः ॥ १६ ॥ श्रुतिप्रणिहितोधर्मःसत्यंसत्यंनसंशयः ॥ किंत्वार्यनिय-
तान्धर्मान्प्रवक्ष्यामियथातथं ॥ १७॥ अंतकालेचसंप्राप्तेयन्नामविवशोगृण
न् ॥ प्रयातिविष्णुसालोक्यंपूर्वपुण्यप्रभावतः ॥ १८ ॥ उत्क्रांतिकालेयन्ना
मश्रुत्वापापैरभिष्टुतः ॥ लभतेपरमंस्थानंकिमुशुश्रूषणेरतः ॥ १९ ॥ महापा
तकयुक्तोवायुक्तोवासर्वपातकैः ॥ यतीनांविष्णुभक्तानापरिचर्यापरायणः ॥
२० ॥ लभतेभगवद्भक्तिंभुक्तिमुक्तिप्रदायिनीं ॥ मुहूर्तंवामुहूर्तार्धंयस्तिष्ठेद्धरि
मंदिरे ॥ २१ ॥ उपलेपनकर्तारःसंमार्जनपरायणाः ॥ ऐहिकामुष्मिकफलंते ५९
षांभवतिनिश्चितं ॥ २२ ॥ मलमासव्रतंचापिश्रुतंमेबहुविस्तरं ॥ तत्कुरुष्व

महाभागयदिश्रेयोभिवांछसि ॥ २३ ॥ एवमाभाषितंश्रुत्वानिश्चयोभूत्सुखा
वहः ॥ ततःपूर्वोक्तसद्धर्माःकृतामेशक्तितोमुने ॥ २४ ॥ एवंबहुतिथेकालेजा
तंपंचत्वमावयोः ॥ तेनव्रतप्रभावेनजातौजातिस्मरौभुवि ॥ २५ ॥ पूर्वजन्मा
र्जितंसर्वमैहिकंचलयंगतं ॥ पापंहिदुःखदंसर्वंमलमासव्रतादरात् ॥ २६ ॥ त
स्माज्ज्ञातप्रभावोहंतदारभ्यमहामुने ॥ चरामिव्रतमेतत्तुयावदाजीवनावधि
॥ २७ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ तदाचरणमात्रेणसराष्ट्रोराजनायकः ॥
वैकुंठमगमद्देविपुण्यकोट्यापिदुर्लभं ॥ २८ ॥ तस्माद्भागवतैःसर्वैरनुष्ठेयोधि
मासकः ॥ विष्णुतुष्टिकरोनित्यंवांछितार्थप्रदायकः ॥ २९ ॥ मलमासस्यमा
हात्म्यंशृण्वंतोयेनराभुवि ॥ पुत्रपौत्रादिकंतेषांवांछितसर्वदाप्रिये ॥ ३० ॥ द
दातिपुंडरीकाक्षोनात्रकार्याविचारणा ॥ एकाध्यायमपिश्रुत्वाभक्तिभावेनमा
नवः ॥ ३१ ॥ सर्वतीर्थेषुसुस्नातोजानोह्यत्रनसंशयः ॥ विष्णोर्गुणानुकथन

श्रवणंचविशेषतः ॥ ३२ ॥ बुधैश्चसर्वदाकार्यंनित्यंश्रेयस्करंमहत् ॥ सर्वदा
श्रवणंकर्तुंशक्यतेनयदिक्काचित् ॥ ३३ ॥ मलमासेविशेषेणप्रत्यहंश्रवणंबु-
धैः ॥ कर्तव्यंसर्वदाभक्त्यात्रिंशन्मासात्मकंफलं ॥३४॥ प्राप्नुवंतिमहात्मानो
नात्रकार्याविचारणा ॥ मलमासोगतोयेषांश्रवणेनविनाखिलः ॥ ३५ ॥ त्रि
लोकस्थोमलःसर्वस्तेषांपततिमस्तके ॥ वाचकःपूजितःश्रुत्वायैर्वस्त्रादिभिरा
दरात् ॥ ३६ ॥ मलमासाधिदेवोहंतेषांतुष्टोनसंशयः ॥ एतत्तेदेविकथितंय-
थास्थितमिदंप्रिये ॥ ३७ ॥ इतिश्रीपद्मपुराणेमलमासमाहात्म्येपूर्वकथनं
नामएकोनत्रिंशोध्यायः ॥ २९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥

हें पुस्तक पुणें पेठ सदाशिव येथें नारो आपाजी गोडबोले
यांचे “ वृत्तप्रसारक ” छापखान्यांत छापिलें आवृत्ती १ ली
तारीख ७ माहे मे सन १८९३ इसवी.

